C. 5. 4486
B. 5. 132. 28
K. 5. 132. 28

यत्तु दानपतिं शूरं क्षुधिताः पृथिवीचराः ।
प्राप्य तृप्ताः प्रतिष्ठन्ते धर्मः कोऽभ्यधिकस्ततः ॥ २६
दानेनान्यं बलेनान्यं तथा सूनृतयापरम् ।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥ २७
ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत् ।
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान् ॥ २८
भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ।
क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता ॥ २९
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ।
साम्ना दानेन भेदेन दण्डेनाथ नयेन च ॥ ३०
इतो दुःखतरं किं नु यदहं हीनबान्धवा ।
परपिण्डमुदीक्षामि त्वां सूत्वामित्रनन्दन ॥ ३१
युध्यस्व राजधर्मेण मा निमज्जीः पितामहान् ।
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिम् ॥ ३२

इति श्रीमहाभारते उद्योगपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

## १३१

कुन्त्युवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विदुरायाश्च संवादं पुत्रस्य च परंतप ॥ १
अत्र श्रेयश्च भूयश्च यथा सा वक्तुमर्हति ।

— $^{c}$) K3.4 B (except B3) Dn D2–4.6.9 तुष्टाः; G3 वित्ताः (for तृप्ताः). K5 B3.5 D1–4.7 प्रतिष्ठंति; G4 प्रतीक्षंते. — $^{d}$) D3.4.9 सो (for को). K1.5 Ds D1.7 G3 M2.3.5 अपि (for अभि-). D3.4.9 तत्र; G3 स्मृतः (for ततः).

27 $^{a}$) K5 अलं; B3 अन्यत् (for अन्यं). K5 B3 D7 धनेन (for बलेन). K5 अलं; B3 अन्यत् (for the second अन्यं). — $^{b}$) D9 G3 यथा (for तथा). — $^{c}$) G4 सर्वत्र च प्रगृ°. — $^{d}$) B3 G3.4 एव (for इह).

28 $^{a}$) Some N. MSS. भैक्ष्यं. — $^{b}$) D1.3.4.8.9 प्रति° (for परि°). — $^{d}$) K3 D1.7 G3 M (except M2) °चरेत तान्; G5 °चरेत्तथा.

29 $^{a}$) Some N MSS. भैक्ष्यं. K1.2.5 D1.7 सु-; K3 T1 G1.4 तु; K4 T2 G2.3.5 M हि (for वि-). — D8 om. $29^{c}$–$30^{d}$. — $^{c}$) B3 [ऽ]पि; G4.5 हि (for ऽसि). K5 क्षतात्त्रासि; Dn2 Ds D1–4.9.10 G3.4 M क्षतत्राता. **Ca** cites क्षतात्. — $^{d}$)=$7^{d}$. K1 T2 °जीवितः; K5 °जीविते; Ds °जीविका; D10 °जीविकः; T1 G1.4 °जीवकः.

30 D8 om. 30. (cf. v.l. 29). — $^{c}$) K3.4 B D (except D1.7; D8 om.) T2 G (except G4) transp. दानेन and भेदेन. — $^{d}$) D7 अपि (for अथ). K3.4 B1.2.4 Dn Ds D3.4.6–10 G4 वा (for च).

31 K1 om. $31^{ab}$. — $^{a}$) K2.3 इदं; K5 D7 अतो (for इतो). K2.3 B3.5 D2–4.9 किं ते; K5 किंचित् (for किं नु). — $^{b}$) Ds यदर्थं (for यदहं). K2–4 B (except B4) Dn D2–4.6.9 दीनबांधवा; T2 G2.4 हि स(G4 न)-बांधवा. — $^{c}$) K3.4 B Dn Ds D3.4.6.9.10 उदीक्षे वै; D8 °क्ष्यैव (for °क्षामि). — $^{d}$) D2 त्वद्दते (for त्वां सूत्वा). K3 B1.3.5 Dn1 Ds D7.10 T G1.2.4 [अ]मित्रनंदनं; D1 [अ]मित्रमर्दनं. K1.2 त्वां शोचामि वनं गतं.

32 $^{a}$) M1.3.4 राजन्धर्मेण. — $^{b}$) B3.5 (corrupt) मा निमज्जय; **Ca** as in text. — $^{d}$) K1.2.5 D7 T2 G2.3.4 सानुगः (for °जः). G1.3.4 M1.2 पापिनां (for °कां).

Colophon missing in D5. — *Sub-parvan:* K B Dn Ds D2.6–8.10 T1 G5 M भगवद्यान. — *Adhy. name:* T1 G1.4 कुन्तीवाक्यं; G2.5 पृथासंदेशकथनं. — *Adhy. no.* (figures, words or both): D6 22 (=122) D7 T2 G4 M1–3.5 133; T1 G1.2.5 134; G3 131; M4 132. — *S'loka no.:* K5 59; Dn2 34; D8 36.

### 131

☞ K5 om. adhy. 131–134. The MS. is mostly ignored here.

1 $1^{ab}$=5. 35. $5^{ab}$; 95. $11^{ab}$; 104. $7^{ab}$. — $^{c}$) K4 B D (except D1.7) विदुलायाः; M1 (*inf. lin.*) विधुरायाः (for विदुरायाः). K1.2 परं वादं (for च सं°).

2 $^{a}$) K1.2 तत्तत्; K3.4 B D **Cs** ततः; M1 (*inf. lin.*), 2.3.4 (*inf. lin.* as in text). 5 अतः (for अत्र). — $^{b}$) K4 B2.4.5 D (for Ds2 see below) **Cs** यथावत् (for

यशस्विनी मन्युमती कुले जाता विभावरी ॥ २
क्षत्रधर्मरता धन्या विदुरा दीर्घदर्शिनी ।
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ३
विदुरा नाम वै सत्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ।
अनन्दनमधर्मज्ञं द्विषतां हर्षवर्धनम् ॥ ४
न मया त्वं न पित्रासि जातः क्वाभ्यागतो ह्यसि ।
निर्मन्युरुपशाखीयः पुरुषः क्लीबसाधनः ॥ ५
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ।
मात्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंस्तभ ॥ ६
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ॥ ७
सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसंतोषः कापुरुषः स्वल्पकेनापि तुष्यति ॥ ८
अप्यरेरारुजन्दंष्ट्रामाश्वेव निधनं व्रज ।

C. 5. 4503
B. 5. 133. 10
K. 5. 133. 10

---

यथा सा). $K_{3.4}$ $B_{4.5}$ $Dn_{2}$ $D_{2-4.6-8.10}$ Cs अर्हसि. $Ds_{2}$ यथा वक्तुमिहार्हति. — [c]) $K_{1.2}$ $D_{1}$ मन° (for यश°). $B_{5}$ पुण्यवती (for मन्यु°). — [d]) $K_{4}$ $B_{3}$ Dn $D_{6.8.10}$ $M_{1}$ विभाविनी; $B_{5}$ मनस्विनी; $D_{7}$ विभावती; Cn विभावरी (as in text).

3 [a]) $K_{3}$ B (except $B_{3}$) Dn Ds $D_{2.6.8.10}$ दांता; S नित्यं (for धन्या). — [b]) B D (except $D_{1.7}$) Ca विदुला; $M_{1}$ (*inf. lin.*) विधुरा (for विदुरा). — [c]) $Dn_{1}$ $D_{8}$ विदुला (for विश्रुता).

4 [a]) B D (except $D_{1}$) $G_{3.4}$ विदुला; $M_{1}$ (*inf. lin.*) विधुरा. B (except $B_{3}$) Dn Ds $D_{6.8.10}$ $G_{4}$ राजन्या; $D_{7}$ वै साध्वी; $T_{1}$ $G_{1}$ सा राजन्; $T_{2}$ $G_{2.5}$ साध्वी सा; $G_{3}$ M सा साध्वी (for वै सत्या). — Before $4^{ef}$, B (except $B_{2}$) D (except $D_{2.7}$) ins.: विदुलो-($D_{1}$ °रो)वाच. — [e]) $K_{1-3}$ अनंदनं तमायांतं; $K_{4}$ $B_{2}$ °नं चामित्राणां; $B_{1.3-5}$ $Dn_{2}$ $Ds_{1}$ $D_{3.4.9}$ $T_{1}$ $G_{5}$ अनंदन मया ($Ds_{1}$ °मा-) जात; $Dn_{1}$ अनंदनं समाजातं; $Ds_{2}$ अभिनंदन ममायांत; $D_{1}$ अनंदन ममादांत; $D_{2}$ अनंदन मम ज्ञात; $D_{6.8.10}$ अनंदन समाजात; $D_{7}$ आनिनिंद तमायांतं; $T_{2}$ $G_{2}$ अनंदनमदैवज्ञं; $M_{3.4}$ (*inf. lin.* as in text). $_{5}$ अनंदनमर्षाज्ञं ($M_{3}$ °णां) (for अनन्दनमधर्मज्ञं). Ca.n cite अनंदन. Ca cites अजात, Cs अजाताः, Cd अनन्दनः and अजातः. — [f]) $K_{3.4}$ B $Dn_{2}$ Ds $D_{1-4.6-10}$ हर्षवर्धन.

5 Before 5, $B_{2}$ ins. विदुलोवाच; T G (except $G_{3}$) ins. विदुरा. — [a]) $K_{4}$ [अ]पि; B (except $B_{5}$) Dn Ds $D_{6.8.10}$ च (for [अ]सि). — [b]) $K_{3}$ $D_{9}$ को (for क्व). $K_{4}$ $D_{7}$ S अपि (for अभि-). — [c]) $K_{1}$ उपशाखी च; $K_{2}$ $D_{8}$ उपशाखीव; $K_{3.4}$ B Dn Ds $D_{2-4.6.9.10}$ चाप्यसंख्येयः; T $G_{1.2.5}$ M उपशामीयः; $G_{3.4}$ च निरुत्साहः; Cs उपशाखीयः (as in text). Ca cites असंख्येयः. Text (according to $D_{1.7}$ and Cs) probably corrupt. Read उपशायी यः? — [d]) $B_{3.5}$ $D_{3.4.7.9}$ T $G_{3}$ M °साधकः; $G_{4}$ °साधनं; Ca.d.s as in text.

6 [a]) $B_{3}$ $T_{2}$ $G_{1.2.5}$ हि (for ऽसि). — [b]) $D_{1}$ कल्याणीं त्वं; $T_{1}$ $G_{4}$ कल्याण त्वं (कल्याणाय). $M_{2.3.4}$ (*inf. lin.*). $_{5}$ कल्याणमधुरं वहः ($M_{2}$ °ह; $M_{4}$ °हं). Ca.d cite $6^{b}$ as in text. — [c]) $K_{4}$ $D_{3.4.9}$ न (for मा). $B_{1.3.5}$ $D_{7}$ S (except $M_{3}$) om. मा. $K_{4}$ अवमन्येत; $D_{1}$ °मन्यैवं; $D_{2}$ °मन्येव; $D_{3.4.9}$ °मन्ये स्वं; $T_{1}$ $G_{1.3.5}$ $M_{4}$ °मत्यैव; $T_{2}$ $G_{2}$ $M_{1-3.5}$ °मत्यैवं; $G_{4}$ °मन्यैव (for °मन्यस्व). — [d]) $B_{1.3.4}$ Ds $D_{7}$ $G_{1.4}$ $M_{1.2.4}$ Ca मैवम्; $D_{1.3.4.8.9}$ नैवम्; $D_{2}$ मेधम्; $T_{2}$ $G_{2}$ $M_{3.5}$ एवम् (for मैनम्). Cd cites एनं. $K_{4}$ नावमन्येत वा परं; $G_{3.5}$ मैव क्ल्पेत बीभरः. Ca.d.s cite बीभरः. — $T_{2}$ om. $6^{e}$–$7^{d}$. — [e]) $T_{1}$ $G_{1.4.5}$ मतिं; $G_{2}$ M मतं (for मनः). $B_{3}$ नमस्कृत्य (for मनः कृत्वा). $K_{4}$ $T_{1}$ $G_{1.4}$ तु (for सु-). $T_{1}$ $G_{1.4.5}$ -कल्याणीं. — [f]) $K_{1-3}$ $D_{1.8}$ Cap प्रतिसंस्तर; $K_{4}$ °स्कृत; B Dn $Ds_{1}$ $D_{3.4.6.9.10}$ $G_{1}$ Ca.s °हर ($G_{1}$ °युगं also); $Ds_{2}$ $D_{7}$ °भव; $D_{2}$ $G_{4}$ M °स्तव.

7 $T_{2}$ om. 7 (cf. v.l. 6). — $7^{ab}=11^{cd}$. — [c]) $T_{1}$ $G_{1.4}$ हर्षयन् (for नन्दयन्). — [d]) Ds $D_{10}$ निर्ममः; S ($T_{2}$ om.) निर्मदः ($G_{3}$ °मेजः; $G_{4}$ °मितः); Ca.d निर्मानः (as in text). $D_{7}$ निर्मानो विह्वलस्तथा.

8 =(var.) Pañcatantra (ed. Kielhorn and Bühler) 1. 25. — [b]) Some MSS. मूषकां°, मुषकां°, and मुषिकां°. — [c]) $K_{1.2.4}$ $B_{1.2.5}$ $D_{1-4.7-9}$ सुसंतुष्टः. $K_{3}$ B (except $B_{5}$) $D_{8}$ $G_{3-5}$ $M_{1}$ कापुरुष. — [d]) $G_{5}$ त्वल्प°; $M_{1.2}$ अल्प° (for स्वल्प°). $B_{2.4.5}$ Dn $D_{6.8.10}$ एव (for अपि).

9 [a]) $K_{4}$ B (except $B_{2}$) $D_{1}$ Ca अहेर्; Cd अरेर् (as in text). $Ds$m ऽयथयः; $G_{5}$ उर्यजन्; Ca.d आरुजन् (as in text). $K_{1}$ $Dn_{1}$ Ds द्दष्ट्रा; Ca.d दंष्ट्रां (as in text). — [b]) $K_{3}$ प्रति; $G_{2.4}$ व्रजेः; Ca.d व्रज (as in text). — [d]) Ds जीवितोपि; T G जीवितेन. $K_{4}$ $B_{4.5}$

C. 5. 4503
B. 5. 133. 10
K. 5. 133. 10

अपि वा संशयं प्राप्य जीवितेऽपि पराक्रम ॥ ९
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विनदन्वाथ वा तूष्णीं व्योम्नि वापरिशङ्कितः ॥ १०
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ॥ ११
मास्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माधो भूस्तिष्ठ चोर्जितः ॥ १२
अलातं तिन्दुकस्येव मुहूर्तमपि विज्वल ।
मा तुषाग्निरिवानर्चिः काकरङ्गा जिजीविषुः ।
मुहूर्तं ज्वलितं श्रेयो न तु धूमायितं चिरम् ॥ १३
मा ह स्म कस्यचिद्गेहे जनी राज्ञः खरीमृदुः ।
कृत्वा मानुष्यकं कर्म सृत्वाजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १४
अलब्ध्वा यदि वा लब्ध्वा नानुशोचन्ति पण्डिताः ।
आनन्तर्यं चारभते न प्राणानां धनायते ॥ १५
उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि ॥ १६
इष्टापूर्तं हि ते क्लीब कीर्तिश्च सकला हता ।

Ds1 D3.4.9 Cn पराक्रमेः; B1.2 Dn2 D2 T2 M4 °क्रमः; B3 Dn1 Ds2 D1.10 °क्रमे; D8 °क्रमैः.

10 $^a$) Dn1 G5 M (except M1) अरे; Cn.s अरेः (as in text). — $^b$) K2 °भ्रमन्; D1 °क्रम; T G1.2.5 M4 (*inf. lin.*) °क्रमात्; G3 °क्रमाः; G4 °क्रमः; Cs °क्रमन् (as in text). Ca.d cite परिक्रमन्. — $^c$) K3.4 B (except B3) Dn D6.7.10 विवदन्; S (except G3.4) विनिंदन्; Cs विनदन् (as in text). D2 विवदित्वा; D3.4.9 विव(D9 °न)दस्व (for विनदन्वा). T G मां (G5 मा) (for the second वा). G5 क्रंदन्; Ca.d.s तूष्णीं (as in text). — $^d$) K3.4 B Ds D2–4.6.8.10 T2 G1.2.5 M1 इव; Ca.d वा (as in text).

11 G3 om. 11–28; G5 om. (hapl.) 11–12. — $11^{cd}=7^{ab}$. — $^c$) D9 त्वं (for हे). K (K5 om.) D1.9 मा विषीद (for कापुरुष). D2 उत्तिष्ठ मा विषीदस्व. — $^d$) K1–3 D1.2.9 युज्य (K3 D2 °ध्य) तात स्वकर्मणा; K4 B Dn Ds D6–8.10 मा स्वाप्सीः शत्रुनिर्जितः (D7 च पराजितः). — D3.4 *repeat* $11^{cd}$ as in D9 above (with only युध्य for युज्य); while D9 *repeats* it as in text.

12 G3.5 om. 12 (cf. v.l. 11). — $^b$) D7 पुष्यस्व त्वं; T2 G2 शुश्रूषस्व; Ca.d विश्रूयस्व (as in text). — $^d$) K1.2 मार्वां (for माधो). B1.4 D10 Cn गर्जितः; Dn1 D9 वोर्जितः; D1 चोत्थितः (for चोर्जितः). Ca.d.np cite ऊर्जितः (as in text). D7 मा वा भूयिष्ठमूर्जितः; T1 मा भूर्भूयिष्ठगर्जितः; T2 G2 मा वा भूयिष्ठशोचितः; G1.4 M मा वा भूयिष्ठशो जि(G4 °शोभि)तः. — After 12, K4 *repeats* $12^{ab}$.

13 G3 om. 13 (cf. v.l. 11). — $^a$) K4 D6.8 अलातस्; Dn1 D3.4.9 अलात-; Ca.d.n अलातं (as in text). — $^b$) K1.3 D2.7 T2 G2.4.5 M Cd विज्वल (as in text); K2 D1 चोज्वल; K4 T1 G1 संज्वल; the rest हि ज्वल. — D4 om. from $13^c$ up to °स्यानृण्य (in $14^c$). — $^d$) K4 कालाकान्जी (? °ङ्क्षी); Dn D6.10 Ca धूमायस्व; Ds Cnp काकरंखो; D1 काकजंघा; D3.9 काकवन्मा; D7 काकवत्त्वं; Cap काकरंकः; Cd.s.ap.np काकरङ्गा (as in text). S (G3 om.) धूमा(G4 मान्मा)येत नरश्चिरं. Ca.d.s.np cite जिजीविषुः (as in text). — $^f$) K3 B (except B2) Dn Ds2 D6–8.10 T1 G5 च (for तु). G5 M धूमायितः.

14 G3 om. 14 (cf. v.l. 11); D4 om. 14 up to °स्यानृण्य (cf. v.l. 13). — $^b$) K4 जना; B Dn2 D2.6 T G1.2.4 Cn जनि; Ca.d.s जनिः (as in text). K4 B5 D2.3.9 Cn खरो मृदुः; Ca.d.s.np as in text. — D9 om. $14^c$–$14^f$. — $^d$) K3 D2.3 श्रुत्वाजिं (see K1.2 below); S (G3 om.) सृ(T2 G2 इ)ष्टात्मा (for सृत्वाजिं). T G (G3 om.) उत्तरं (for उत्तमम्). K1.2 Ca.d.s श्रि(K1 छि)त्वाजिं यावदुत्तमं. — $^f$) D3.4 नात्मानं च (for न चात्मानं). K1–3 विगर्हति; K4 B3.5 D3.4 °येत्; D2 विगृह्यते; D6.8 विगर्हयेः.

15 G3 om. 15 (cf. v.l. 11). — $^a$) S (except G1; G3 om.) लब्ध्वा वा (M2 न लब्ध्वा) यदि वालब्ध्वा. — $^b$) = Gītā 2. $11^d$ (Vulg.). G5 न तु (for नानु-). B2.4.5 Dn D1.6.7.10 -शोचति पंडितः. — $^c$) K1.2 Ds2 T1 G1.4.5 M चा(M2 त्वा)रभंते; B4 चालभंते; D1 च लभते (for चारभते). D7 कातर्यमंतरे किं तत्. — $^d$) K4 Ds2 D1.3.4.7.9 प्रा(Ds2 D1 न प्रा)णानां नि(D3.4.9 न)धनायते; S (G3 om.) न प्राणपरिरक्षणं; Cs as in text. Ca cites धनायते, Cd न धनायते.

16 G3 om. 16 (cf. v.l. 11). — $^a$) Ca.d तद्भावयस्व. — $^b$) K3 D3.4.9 नो वा गच्छ; D2 तात गच्छ; D7 गच्छ तां वा. Cs cites तां गच्छ. — $^d$) = $17^d$.

17 G3 om. 17 (cf. v.l. 11). — $^a$) D3.4.9 S (G3

विच्छिन्नं भोगमूलं ते किंनिमित्तं हि जीवसि ॥ १७
शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विषीदेत्कथंचन ।
उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् ॥ १८
कुरु सत्त्वं च मानं च विद्धि पौरुषमात्मनः ।
उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि ॥ १९
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥ २०
दाने तपसि शौर्ये च यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ २१
श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा ।
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ॥ २२
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ॥ २३
यमेनमभिनन्देयुरमित्राः पुरुषं कृशम् ।
लोकस्य समवज्ञातं निहीनाशनवाससम् ॥ २४
अहोलाभकरं दीनमल्पजीवनमल्पकम् ।
नेदृशं बन्धुमासाद्य बान्धवः सुखमेधते ॥ २५
अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात्प्रवासिताः ।
सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिंचनाः ॥ २६
अवर्णकारिणं सत्सु कुलवंशस्य नाशनम् ।
कलिं पुत्रप्रवादेन संजय त्वामजीजनम् ॥ २७
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ २८

C. 5. 4524
B. 5. 133. 31
K. 5. 133. 31

---

om.) च (for हि). $K_3$ हतं (for हि ते). — $^c$) $G_4$ विभिन्नं (for विच्छिन्नं). — $^d$) $= 16^d$.

18 $G_3$ om. 18 (cf. v.l. 11). — $^a$) $D_1$ $T_2$ G ज़ंघायाः. $D_{3.4.9}$ च (for प्र-). Ca. d. s read $18^{ab}$ as in text. — $^d$) $B_3$ न विषीदेत कश्चन. — $^f$) $D_7$ आत्मनैव कृतं; Ca. d as in text. $G_4$ स्मरेत्.

19 $G_3$ om. 19 (cf. v.l. 11). — $^b$) $T_2$ $G_2$ आत्मज (for आत्मनः). — $^c$) $D_8$ उद्धारय (for उद्भावय). $D_7$ छन्नं (for मग्नं). — $^d$) $B_{3.5}$ $D_{3.4.9}$ $G_{2.5}$ M ह (for हि).

20 $G_3$ om. 20 (cf. v.l. 11). — $^a$) $B_4$ Ds वृत्तिं (for वृत्तं). $D_7$ जानंति (for जल्पन्ति). — $^c$) $G_2$ जात°; M °मात्रः. Ca. d. s cite राशिवर्धनं (Cs °नः). — $^d$) $= 30^d$.

21 $G_3$ om. 21 (cf. v.l. 11). — $^a$) Dn Ds $D_{6.8.10}$ सत्ये (for शौर्ये). $D_{2-4.7.9}$ S (except $G_4$; $G_3$ om.) वा (for च). — $^b$) $K_{3.4}$ B D (except $D_7$) नोच्चरितं (for न प्रथितं).

22 $G_3$ om. 22 (cf. v.l. 11). — $^a$) $T_2$ $G_{2.5}$ चैव (for वापि). — $^b$) Ds श्रिया विक्रमणेन वा. — $^c$) $K_4$ $M_{1.4}$ जानन् (for जनान्). — $^d$) $D_{1.10}$ स हि (by transp.). S ($G_3$ om.) वा (for हि).

23 $G_3$ om. 23 (cf. v.l. 11). — $^a$) $D_{3.4.9}$ $M_{3.4}$ न त्वे($M_4$ नत्वै)वं; $D_{10}$ न त्वं च (for न त्वेव). $D_{3.4.9}$ जाल्मकापालीं; Ca. d. s as in text. — $^b$) $K_4$ $D_{3.4.7-9}$ वृत्तिं सेवितुमर्हसि. — $^c$) $K_{1.2}$ $D_7$ $M_1$ नृशंसाम्.

24 $G_3$ om. 24 (cf. v.l. 11). — $^a$) $K_1$ $B_{1.2.4.5}$ $D_6$ Ca. d. n. s यम् (as in text); $K_4$ $T_2$ $G_2$ यथा; $B_3$ Dn Ds $D_{7.10}$ यत्र; $T_1$ $G_{1.4.5}$ $M_4$ यत्; the rest यः. Ds एवं (for एनं). — $^c$) $K_{1.2}$ समविज्ञातं; $T_2$ $G_2$ समवस्थानं. — $^d$) $K_3$ $B_{1.2.4.5}$ Dn $Ds_2$ $D_{6.8}$ निहीनासन°; $K_4$ $B_3$ $Ds_1$ $D_{2.7}$ विहीनासन°; $D_{3.4.9}$ S ($G_3$ om.) विहीनाशन°.

25 $G_3$ om. 25 (cf. v.l. 11). — $^a$) $K_4$ $B_3$ Dn $D_{3.4.8-10}$ $G_{2.5}$ $M_1$ -लोभकरं; $D_1$ -लोकभरं; $D_2$ अल्पधनं; Ca. n. s -लाभकरं (as in text). $K_4$ B D (except $D_{1.2.7}$) $G_4$ हीनं (for दीनं). — $^b$) $K_{1.2}$ $D_{10}$ अल्पाजीवनं; $D_2$ अल्पजीवितं; $D_7$ स्वल्पाजीवकं; $T_2$ $G_{2.5}$ M अल्प($M_{2.5}$ °ल्पा)जीवकं. Ds अल्प ($Ds_1$ °ल्पा)जीवमनल्पकं. — $^d$) K ($K_5$ missing) $Dn_2$ $D_{7.8.10}$ $T_1$ $G_4$ $M_{3-5}$ बांधवाः (plu.!); Ca. d. n. s बान्धवः (as in text). $M_{1.2}$ एधंते बांधवाः सुखं ($= 41^b$).

26 $G_3$ om. 26 (cf. v.l. 11). — $^a$) $D_{10}$ श्ववृत्त्यैव. Ca. d. s cite अवृत्त्या. — $^b$) $D_7$ S ($G_3$ om.) वि° (for प्र°). — $^c$) $D_7$ °सुखैर् (for °रसैर्). — $^d$) S (except $G_4$; $G_3$ om.) स्थानाद्भ्रष्टाः. $K_{1.2}$ $D_{3.4.9}$ ह्यकिं°; $B_3$ स्वकिं° (for अकिं°).

27 $G_3$ om. 27 (cf. v.l. 11). — $^a$) $K_{1.2}$ Ds $D_{2-4.7-9.10}$ m Cd. s. ap. np अकर्म°; $K_3$ B (except $B_3$) Dn $D_{1.6.10}$ Ca अवल्गु° (for अवर्ण°). — $^b$) $T_1$ $G_{1.5}$ M नाशकं; Ca as in text. — $Ds_2$ om. $27^{cd}$. — $^d$) $K_2$ $Ds_1$ $D_{10}$ संजयं; $B_3$ विमूढं; $T_1$ $G_1$ सुत यत्; $T_2$ $G_{2.4.5}$ M (except $M_5$) सृंजय (for संजय).

28 =(var.) Hitopades'a 2. 6. — $G_3$ om. 28 (cf. v.l. 11); $K_1$ $D_1$ om. $28^{ab}$. — $^a$) $K_4$ $B_5$ $D_9$ S ($G_3$ om.) निरामर्षं. — $^b$) $G_2$ निर्वीर्यमनरिंदमं. —

C. 5. 4524
B. 5. 133. 31
K. 5. 133. 31

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥ २९
एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥ ३०
संतोषो वै श्रियं हन्ति तथानुक्रोश एव च ।
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ॥ ३१
एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना ।
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ॥ ३२
पुरं विषहते यस्मात्तस्मात्पुरुष उच्यते ।
तमाहुर्व्यर्थनामानं स्त्रीवद्य इह जीवति ॥ ३३
शूरस्योर्जितसत्त्वस्य सिंहविक्रान्तगामिनः ।
दिष्टभावं गतस्यापि विघसे मोदते प्रजा ॥ ३४
य आत्मनः प्रियसुखे हित्वा मृगयते श्रियम् ।
अमात्यानामथो हर्षमादधात्यचिरेण सः ॥ ३५

पुत्र उवाच ।

किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ३६

मातोवाच ।

किमद्यकानां ये लोका द्विषन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः सुहृदस्तान्व्रजन्तु नः ॥ ३७
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्त्वानां मा वृत्तिमनुवर्तिथाः ॥ ३८
अनु त्वां तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ ३९
यमाजीवन्ति पुरुषं सर्वभूतानि संजय ।
पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥ ४०
यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥ ४१
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥ ४२

इति श्रीमहाभारते उद्योगपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

---

After $28^{ab}$, D8 reads 31.

29 G3 resumes from 29. K4 om. $29^{c}$–$31^{d}$. — $^{c}$) K1.2 ज्वलन् (for ज्वल).

30 K4 om. 30 (cf. v.l. 29). — $^{a}$) = 1. 150. $13^{e}$. — $^{c}$) D3.4.9 हि (for च). — $^{d}$) = $20^{d}$.

31 K4 om. 31 (cf. v.l. 29). D8 reads 31 after $28^{ab}$. — $^{c}$) G1.4 चापि (for चोभे). G3 अनुत्थानं भयो लोभो — $^{d}$) K1.2 D1–4.8.9 यैर्वृतो (for निरीहो). D1 महीं; D8 सुखं (for महत्).

32 $^{a}$) T G1.2.5 °पाशेभ्यः. — $^{d}$) T G (except G3) स्वकं पुरं (for पुनः स्वकम्).

33 $^{a}$) K3.4 B (except B3) Dn2 D3.4.6–10 G5 Cn परं (for पुरं). — $^{c}$) M (M1 before corr.) व्यर्थमात्मानं. — $^{d}$) T1 G1.4 transp. स्त्रीवत् and यः. S (except G1.4) जीर्यते (for जीवति).

34 $^{b}$) K4 B (except B2) D (except D1.2) °चारिणः. — $^{d}$) K4 B1.2.4 Dn Ds1 D2.6.8.10 T1 G3.4 विषये; T2 G1.2.5 यशसे; Ca. d. s विघसे (as in text). K1.3 B3 Ds2 D8 T2 G2.4 M प्रजाः (plu.!) (for प्रजा).

35 $^{a}$) D3.4.9 अथा° (for य आ°). — $^{b}$) T1 G2.3.5 सुखं; T2 G1.4 परं; M स्वकं (for श्रियम्). — $^{c}$) G3.5 अमित्राणाम् (for अमात्यानाम्). K1.2 D2–4.9 अतो (for अथो). — $^{d}$) Ds आदध्यादचिरेण यः.

36 = 5. 133. 3. — D3.4.9 पुत्रकः; T G1.5 सृंजयः; G2.4 संजयः; M पुत्रः (for the ref.). — $^{b}$) D3.4.9 वापि; D10 चापि (for अपि). Dn2 G1.3 सर्वथा; D1.3.4 °शः (for °या). — $^{c}$) D1.7.8 °कृत्येन (for °कृत्यं ते). — $^{d}$) B3 ते; B5 D3.4 च (for वा).

37 S विदुरा (for मातोवाच). — T2 G1.2 om. $37^{ab}$. — S ins. after the ref.: D3.4.9 after $37^{ab}$:

503* परैर्विहन्यमानस्य जीवितेनापि किं फलम् ।

— Thereafter D3.4.9 *repeat* $37^{ab}$ (with v.l. as in S)! — $^{a}$) K4 Dn1 D8.10 अनाहतानां; B2 Dn2 अनादृतानां; B3 अनहूतानां; D2 कामिनां चैव; S निर्मन्युकानां; Ca. d. s किमद्यकानां (as in text.). — $^{b}$) D2 दुर्बुद्धे तानवाप्नुहि. — $^{c}$) D1 S ये वा (M3–5 त्वा) धृतात्मनां लोकाः; D8 ये त्वात्मना हृता लोकाः; D10 ये त्वाहतात्मनां लोकाः. — $^{d}$) B3 व्रजंतु ते; D3.4.9 व्रजंति ते.

38 $^{c}$) K4 D7 S अनाथानां (for असत्त्वानां). — $^{d}$) D1 °जीविथाः; G3 °वर्तय (for °वर्तिथाः).

39 Ds om. $39^{ab}$. — $^{a}$) T1 G5 M त्वा (for त्वां). — $^{b}$) D3.4.7.9 S सुहृदः साधवस्तथा.

# १३२

विदुरोवाच।

अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि।
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥ १
यो हि तेजो यथाशक्ति न दर्शयति विक्रमात्।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः ॥ २
अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च।
नैव संप्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ॥ ३
सन्ति वै सिन्धुराजस्य संतुष्टा बहवो जनाः।
दौर्बल्यादासते मूढा व्यसनौघप्रतीक्षिणः ॥ ४
सहायोपचयं कृत्वा व्यवसाय्य ततस्ततः।
अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषम् ॥ ५
तैः कृत्वा सह संघातं गिरिदुर्गालयांश्चर।
काले व्यसनमाकाङ्क्षन्नैवायमजरामरः ॥ ६
संजयो नामतश्च त्वं न च पश्यामि तत्त्वयि।
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥ ७
सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत्।
अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति ॥ ८
तस्य स्मरन्ती वचनमाशंसे विजयं तव।

C. 5. 4547
B. 5. 134. 9
K. 5. 134. 9

---

40 b) D3.4.9 पुत्रक; S सृंजय (for संजय). — c) G3 M (except M4) पक्व- (for पक्वं). T2 G2 फलं (for द्रुमम्). — d) D3.4 जीवनम् (for जीवितम्).

41 d) D3.4.9 सफलं तस्य जी°; T2 G2.5 सारं तस्येह (G5 तस्यैव) जी°.

42 a) T1 आसाद्य (for आश्रित्य). — b) K4 योभिजीवति; D2 यो जिजी°; D3.4.8.9 यस्तु जी°; D7 T G (except G3) यो हि जी°; M1 यो ह्युज्जी°. — c) K4 D1.3.4.6.8.9 M1.3 स्व- (for स). — d) D7 S सुखां (for शुभां).

Colophon missing in D5; K5 om. it. — *Sub-parvan:* K1–3 B1.3–5 Dn Ds D6.8.10 T1 G1.4.5 M1.2 भगवद्यान (T1 G1.4 °वत्प्रतियान); to it K1–3 B5 Dn Ds D10 add विदुला(K1–3 B5 °रा)पुत्रानुशासन; T1 G1.2.4 M1.2 विदुरा(G4 °र)पुत्रसंवाद. K4 D1.2 G2 M3–5 (all om. sub-parvan name) mention only विदुरा(K4 °र)पुत्रानुशासन (G2 M3–5 विदुरापुत्रसंवाद). — *Adhy. name:* D7 विदुरापुत्रः; G2.5 पराक्रमप्रोत्साहनं. — *Adhy. no.* (figures, words or both): D6 23 (=123); D7 T2 M1–3.5 134; T1 G2.4.5 135; G1 136; G3 132; M4 133. — *S'loka no.:* Dn 45.

## 132

☞ This adhy. is missing in K5 (cf. v.l. 5. 131. 1). The MS. is mostly ignored hereafter.

1 B Dn Ds D3.4.6.8–10 विदुला (for विदुरा). — a) B1.3 तथा (for अथ). S वा(G4 [ए]वा)स्यां (for एतस्याम्). — c) B1 D3.4.7.9 M3–5 विहीन-; B3 Dn1 D2.6.8 T2 G2.4 न हीन-; G3 नीचेन; G5 त्वं हीन- (for निहीन-). — d) B3 D7 G4.5 चिरात् (for [अ]-चिरात्).

2 b) K1.2 D9 विक्रमन्; D1 पौरुषं (for विक्रमात्).

3 c) K1.2 सु- (for सं-). M त्वा (for त्वां).

4 a) K1.2 सैनिकैः; D1 अस्यैव (for सन्ति वै). — b) B Dn Ds D6.8.10 न तथा (for बहवो). — c) D3.4.9 दीना; T2 G2 गूढा (for मूढा). — d) D7 G3.4 °क्षणः; T1 M5 °क्षणाः.

5 a) K3.4 B1.4.5 Dn Ds D3.4.6.9.10 सहायोपचितिं; B2 D7.8 T2 °चितं. Cs as in text. S दृष्ट्वा (for कृत्वा). — b) K4 Dn1 D1.3.4.8–10 व्यवसायं; D2 व्यवस्थाय; S आगच्छेयुः (for व्यवसाय्य). K1.2 D7 यतस्ततः. — c) T G1.2.4.5 M1 अनुतुष्येयुः; Ca. d. s °दुष्येयुः (as in text).

6 a) B3 सह संधानं; T1 G3 M3–5 सहसा यानं; T2 G2.5 सहसा यात्रां; G4 सहसा भूतं; M1.2 सहसा योगं (for सह संघातं). — b) K3.4 B Dn Ds1 D3.4.6.8–10 °लयं; D2 G5 °लयः (for °लयान्). D3.4.9 स्मरन्; D7 तरन्; S (except T2 G2) चरन् (for चर). D1 गिरिदुर्गालयेश्वर. — c) B T2 G2.5 M5 आकांक्ष. — After 6, D3.4.9 read $23^{ab}$ (for the first time), *repeating* it in its proper place.

7 G3 om. $7^{ab}$. — a) S (except G5; G3 om.) सृंजयो. D3.4.9 नाम तत्सत्यं. — b) K1.2 M2 तं; Ca तत् (as in text). — d) D9 T2 G (except G4) न (for मा).

8 a) T2 G2 सम्यग्दृष्ट्वा. Ds1 D10 महाप्रज्ञो. — b) Dn1 बालं त्वा; D3.4.9 बालत्वे. — d) B3.5 D7 G5 M Ca ऋद्धिं; G3 अर्थं (for वृद्धिं).

C. 5. 4547
B. 5. 134. 9
K. 5. 134. 9

तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥ ९
यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥ १०
समृद्धिरसमृद्धिर्वा पूर्वेषां मम संजय ।
एवं विद्वान्युद्धमना भव मा प्रत्युपाहर ॥ ११
नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ १२
पतिपुत्रवधादेतत्परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥ १३
अहं महाकुले जाता ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणैर्भर्त्रा परमपूजिता ॥ १४
महार्हमाल्याभरणां सुमृष्टाम्बरवाससम् ।
पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत्सुदुर्गताम् ॥ १५
यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बले ।
न तदा जीवितेनार्थो भविता तव संजय ॥ १६
दासकर्मकरान्भृत्यानाचार्यर्त्विक्पुरोहितान् ।
अवृत्त्यास्मान्प्रजहतो दृष्ट्वा किं जीवितेन ते ॥ १७
यदि कृत्यं न पश्यामि तवाद्येह यथा पुरा ।
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥ १८
नेति चेद्ब्राह्मणान्ब्रूयां दीर्यते हृदयं मम ।
न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥ १९
वयमाश्रयणीयाः स्म नाश्रितारः परस्य च ।
सान्यानाश्रित्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥ २०
अपारे भव नः पारमप्लवे भव नः प्लवः ।
कुरुष्व स्थानमस्थाने मृतान्संजीवयस्व नः ॥ २१
सर्वे ते शत्रवः सह्या न चेज्जीवितुमिच्छसि ।

---

9 $^{a}$) $G_{3}$ M यस्य ( $M_{4}$ यत्र) (for तस्य). — $^{c}$) $Dn_{1}$ $M_{1.2}$ त्वा (for त्वां). — $^{d}$) T $G_{1.2.5}$ प्रवक्ष्यामि पुनः पुनः.

10 $^{a}$) $Ds_{2}$ $D_{10}$ Cd -भिनिवृत्तौ; $D_{7}$ -भिसंवृत्तौ; $T_{1}$ $G_{1.3}$ हि निर्वृत्ताः; $G_{5}$ विनिर्वृत्ताः; Ca. s as in text. — $^{b}$) $K_{1-3}$ Cd आप्यायिनः; S उपह( $G_{2}$ °हि)ताः; Ca. s as in text. T G (except $G_{3}$) $M_{1}$ (*inf. lin.* as in text) परैः; Ca. s परे (as in text). — $^{d}$) $B_{3}$ नयेषु स्वार्थसारिणः; Ds नये स्वार्थानुसा°; $D_{2}$ नयेष्वर्थानुशासने; $D_{7}$ नरस्यार्थानुसा°; $G_{5}$ ये स्युरर्थानुसा°.

11 $^{b}$) S सृंजय; Cs as in text. $K_{1.2}$ पूर्वैषा मयि संजय. — $^{c}$) $B_{3.5}$ Dn $D_{1-4.8.9}$ $G_{3}$ विद्वन्; all comm. विद्वान् (as in text). $D_{1}$ S (except $G_{1}$) Ca युध्यमानो; Cd. s as in text. — $^{d}$) $K_{1-3}$ Ds $D_{2.7.8}$ $G_{2}$ Cd. s प्रत्यवाहर (Ds $D_{2}$ $G_{2}$ Cd. s °रः); B (except $B_{3}$) $Dn_{2}$ $D_{3.4.6}$ $T_{2}$ Ca. n प्रत्युपाहरः; $G_{3}$ $M_{2}$ प्रत्युदाहर.

12 =5. 70. 22. — $D_{9}$ om. (hapl.) $12^{c}$–$13^{b}$. — $^{c}$) S (except $G_{3}$) यस्य नैवोद्यतः ( $T_{1}$ $G_{1.4.5}$ नैवोद्यतं; $T_{2}$ नैवाश्नतः also) प्रातर्.

13 $D_{9}$ om. $13^{ab}$ (cf. v.l. 12). — $^{a}$) $T_{2}$ $G_{2}$ पत्नी°. — $^{c}$) $D_{2-4.9}$ दरिद्रं. $D_{3.4.9}$ दुःखं (for प्रोक्तं).

14 =(var.) 5. 88. 91. — $^{c}$) $T_{1}$ $G_{3-5}$ M (except $M_{5}$) ईश्वरा. $K_{3.4}$ $B_{3}$ D (except $Ds_{1}$ $D_{10}$) $T_{2}$ $G_{2}$ °कल्याणी. — $^{d}$) $B_{3}$ $D_{8}$ भद्रा (for भर्त्रा).

15 $^{a}$) $D_{3.4.9}$ $G_{2.3}$ M (except $M_{4}$) °माल्या( $G_{3}$ °माला)भरणा. — $^{b}$) $K_{4}$ $M_{2}$ सं- (for सु-). $K_{4}$ °वाससा; $D_{3.4.9}$ $G_{3}$ $M_{1-3.5}$ °वासिनी; $D_{8}$ $G_{1.2.4.5}$ $M_{4}$ °वासिनीं; $T_{1}$ °वाससीं; $T_{2}$ °धारिणीं. — $^{c}$) $B_{2.5}$ $Dn_{2}$ $D_{1}$ हृष्टः (for दृष्ट्वा). — $^{d}$) $K_{4}$ B (except $B_{2}$) Dn $D_{6.8}$ सुहृद्गतां; S (except $M_{2.4.5}$) सुदुःखितां (for सुदुर्गताम्).

16 $^{b}$) $K_{3.4}$ B Dn Ds $D_{2-4.6.8-10}$ भृशदुर्बलां; $D_{1}$ कृशदुर्बले. — $^{d}$) S सृंजय (for संजय).

17 $^{b}$) $D_{3.4.9}$ आचार्यान्सपुरोहितान्. — $^{c}$) $G_{3.4}$ संप्रति (for अवृत्त्या). — $^{d}$) $K_{3}$ $G_{3}$ मे (for ते).

18 $^{b}$) $K_{3.4}$ B D अहं ( $D_{1.3.4.9}$ हि) (for इह). — $^{c}$) $D_{7}$ S वदान्यं (for यशस्यं).

19 $^{a}$) $K_{3.4}$ $D_{2-4.9}$ S च (for चेद्). B D (except $D_{7}$) $T_{2}$ $G_{1.2}$ ब्राह्मणं. $D_{7}$ $T_{1}$ भूयां; $G_{1.3.5}$ $M_{1.2}$ ब्रूयात्; $G_{4}$ भूयो; $M_{3-5}$ ब्रूयाः; Ca. s ब्रूयां (as in text). — $^{b}$) $K_{3.4}$ $B_{2.4.5}$ D (except $D_{2}$) Cs दीर्येत.

20 $^{a}$) $Dn_{2}$ $D_{1-4.8}$ $T_{1}$ $G_{3}$ वयमाश्रमणीयाः. $K_{1-4}$ $B_{1-3}$ Ds $D_{2-4.8-10}$ हि; $D_{1}$ च (for स्म). — $^{b}$) $K_{1.2.4}$ $B_{2.4}$ $Dn_{2}$ $D_{1.2.7.8}$ $G_{4}$ Ca. d. s न श्रोतारः; Ds $D_{10}$ नाश्रोतारः; $D_{3.4.9}$ आश्रितायाः (for नाश्रितारः). Cn cites श्रोतारः; Cnp श्रेतारः. $D_{2}$ परंतप (for परस्य च). $K_{4}$ श्रोतारः परमस्य च. — $^{c}$) $K_{3}$ $B_{2.4}$ Dn Ds $D_{6.8.10}$ सान्यमासाद्य; $K_{4}$ त्वासुपाश्रित्य; $B_{1.3.5}$ मान्यानाश्रित्य; $D_{3.4.7.9}$ सान्यमाश्रित्य. — $D_{8}$ om. $20^{d}$–$22^{a}$.

22 $D_{8}$ om. $22^{a}$ (cf. v.l. 20). — $^{a}$) $K_{3}$ $B_{2.4.5}$ $D_{3.4.6.9}$ शक्याः; Ca. d. s. np सह्याः (as in text) — $^{b}$) B Dn $D_{6.8}$ अर्हसि (for इच्छसि). — $^{c}$) $B_{3}$ T G (except $G_{3}$) $M_{1.2}$ ईदृशं. $B_{3}$ $T_{2}$ $G_{2.5}$ $M_{1.2}$ वृत्तं; $T_{1}$ $G_{1.4}$ कर्म (for वृत्तिं). — $^{d}$) $K_{1.2.4}$ $D_{1.2}$ क्लीबामभ्युद्

अथ चेदीदृशीं वृत्तिं क्लीवामभ्युपपद्यसे ॥ २२
निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ २३
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत् ॥ २४
नाम विश्राव्य वा संख्ये शत्रूनाहूय दंशितान् ।
सेनाग्रं वापि विद्राव्य हत्वा वा पुरुषं वरम् ॥ २५
यदैव लभते वीरः सुयुद्धेन महद्यशः ।
तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥ २६
त्यक्त्वात्मानं रणे दक्षं शूरं कापुरुषा जनाः ।
अवशाः पूरयन्ति स्म सर्वकामसमृद्धिभिः ॥ २७
राज्यं वाप्युग्रविभ्रंशं संशयो जीवितस्य वा ।
प्रलब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥ २८
स्वर्गद्वारोपमं राज्यमथ वाप्यमृतोपमम् ।
रुद्धमेकायने मत्वा पतोल्मुक इवारिषु ॥ २९
जहि शत्रून्रणे राजन्स्वधर्ममनुपालय ।
मा त्वा पश्येत्सुकृपणं शत्रुः श्रीमान्कदाचन ॥ ३०
अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम् ।
अपि त्वां नानुपश्येयं दीना दीनमवस्थितम् ॥ ३१
उष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा ।

C. 5. 4570
B. 5. 134. 32
K. 5. 134. 32

(D2 °त्यति)वर्तसे; S क्लीबानां न च मन्यसे.

23 a) D3.4.9 निर्विण्णार्थो; D7 विनष्टात्मा; Ca. d निर्विण्णात्मा (as in text). — b) D5 D3.4.9 (latter three first time).10 मुंचेमां; D1 व्याख्यातां; D2 व्याघातं; D7 T2 G2.3.5 त्यजैनां; T1 G1.4 M त्यजैतां (for मुञ्चैतां). T G1.2 M प्रेत° (for पाप°). K1–3 कृपणामेष्यसे दशां. — d) D7 शूरा गच्छंति. B2 D5 G3 विश्रुतं; M3–5 निर्वृतिं; Ca. d as in text.

24 b) D6.8 प्रतिपद्यते (for समपद्यत). — c) K1.2 स माहेंद्रं; G5 माहेंद्रीं च; Cs माहेन्द्रं च (as in text). K4 B2.5 Dn D3.4.7–9 Cap. dp. np. sp प्रग्रहं; B3 विग्रहं; G4.5 च श्रियं; Cs च ग्रहं (as in text). Ca. d. n cite ग्रहं (as in text). — d) S (except G3 M1.2) om. च.

25 a) K4 B2.4.5 Dn D5 D6.8.10 वै संख्ये; D7 संग्रामे. — b) S (mostly) दंसितान्. — c) K3.4 B D (except Dn1) चापि; G4 प्राप्य (for वापि). — d) K4 पुरुषान्वरान्; D3.4.9 S (except T1 G1) पुरुषं परं.

26 a) T1 G1.4 यदेव; T2 G2.3 यथैव (for यदैव). — b) D2 तदैवास्तं; D3.4.9 सुयुद्धे वै; D7 सुयुद्धे सु; G2 संयुद्धेन. — c) T2 G1–3 तथैव. D7 प्रच्यवंते. B3.5 D3 स्य; T G1.3.4 M (except M1) च (for ऽस्य). — d) D10 प्रणमंति; D3.4.9 विलपंति; T G [अ]पि नमंति (for विनमन्ति). K3 D2 वा; D7 ते (for च).

27 a) D7.9 T1 G5 M (except M4) त्यक्तात्मानं. — b) S शूरं पुरुषमानिनं. — c) K3 D1.6 Cn तर्पयंति; K4 S पूजयंति.

28 a) K2.4 B4 D6 च (for वा). B1–3.5 भ्रंशो वाप्यस्तु राज्यस्य; D3.4.9 राज्यस्य चात्र विभ्रंशात्; D7 राज्यनाशं परिभ्रंशं; S राज्यस्या(M4 राज्यं वा [*inf. lin.* चा])प्यस्य विभ्रंशः. Ca. d. s cite उग्रविभ्रंशं (as in text). — b) D3.4.9 संशये. D3.7.8 T G (except G3) च (for वा). — c) B (except B2) Dn D6.10 न; D3.4.8.9 अ-; Ca. d. s प्र- (as in text). — d) T2 G2 द्वेषं; Ca. d. s शेषं (as in text).

29 After $29^{ab}$, G1.5 ins. 504*. — D8 om. $29^{c}$–$30^{d}$; G5 om. $29^{cd}$. — c) K1.2 D3.4.9 ऋद्धं; D1 भद्रं; D2 युद्धं; T2 बद्धं; Cd. s रुद्धं (as in text). K3 B5 Dn2 Cn एकायनं; Ca. d. s एकायने (as in text). B1–4 प्राप्यं विदित्वा विक्रम्य. — d) K1.2 D3 D2.7 उल्मुकम्. S (G5 om.) पतोल्कमिव वा(T1 G1 चा)रिषु. — T2 G2 ins. after 29: G1.5, after $29^{ab}$:

504* भुङ्क्ष्व युद्धेन मे शत्रूञ्जित्वा तु रणमूर्धनि ।

G1 cont.:

505* नियच्छन्नितरान्वर्णान्विनयन्सर्वदुष्कृतान् ।

30 D8 om. 30 (cf. v.l. 29). — a) T2 G2 शूरान् (for राजन्). — b) K1 B3 D3.4.9 G3 °पालयन्. — c) T2 G2 न (for मा). K4 B1.2.4.5 Dn D5 D1.2.6.10 त्वा दृशं; M3 त्वा दर्शेत् (for त्वा पश्येत्). ❀ Nil.: पाठान्तरं तु मूढजनकल्पितं नादरणीयम् । ❀ B3 मत्वा भृशं सुकृपणं. — d) K4 B Dn D5 D6.10 शत्रूणां भय(B3 Dn2 D5 D10 श्रीवि)वर्धनं.

31 a) B2.4 असत्पक्षैश्च शो°. — b) Dn1 D6.8 अशोचद्भिः; Dn2 D10 M3.4 नंदद्भिश्च. B3 D7 चापरैः; M अपरैः (for च परैः). T G1.3.4 M भृशं (for वृतम्). G2.5 चपलैरपरैर्भृशं. — c) T1 G4 न हि; M1.2 अहं (for अपि). S (except T2 G3) त्वा (for त्वां). T1 G1.4 तात; G5 न तु (for नानु-). — d) B3.5 Dn2 D2–4.8 दीनाद्; D5 दीनं; D7 दीन- (for दीना). K4 उपस्थितं; B3 Dn2 D10 इवा°; B5 Dn1 D5 D6 T2 G1.2.4 M1 इव स्थितं (for अवस्थितम्).

C. 5. 4570
B. 5. 134. 32
K. 5. 134. 32

मा च सैन्धवकन्यानामवसन्नो वशं गमः ॥ ३२
युवा रूपेण संपन्नो विद्ययाभिजनेन च ।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ।
वोढव्ये धुर्यनडुवन्मन्ये मरणमेव तत् ॥ ३३
यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ।
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ॥ ३४
नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ।
न त्वं परस्यानुधुरं तात जीवितुमर्हसि ॥ ३५
अहं हि क्षत्रहृदयं वेद यत्परिशाश्वतम् ।
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ॥ ३६
यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रधर्मवित् ।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥ ३७
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥ ३८
मातङ्गो मत्त इव च परीयात्सुमहामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च संजय ॥ ३९
नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥ ४०

इति श्रीमहाभारते उद्योगपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

---

32 $^{a}$) $K_{1.2}$ इष्टः; $K_3$ $D_7$ हृष्टः; $K_4$ B Dn $D_{1.6.8.10}$ Ca.d.s हृष्य; Ds कृष्य; $D_{2-4.9}$ हृष्टं (for उष्य). — $^{b}$) $K_{1-3}$ $D_{6-8}$ $T_2$ $G_2$ श्लाघ्यः स्वार्थैः; $B_{1-3}$ $D_{3.4.9}$ हृष्यमाणो; $M_5$ श्लाघस्वार्थै. Ca.d cite श्लाघ्यः, Cs श्लाघ्यस्व. S यथापु($G_2$ प)रं. — $^{c}$) $K_{1.2}$ माद्य (for मा च). — $^{d}$) $D_{3.4.6.8.9}$ $T_1$ $M_{1.3-5}$ अवहास-; $T_2$ G $M_2$ अपहास-; Ca अवसन्नः (as in text).

33 $^{c}$) $B_{4.5}$ $Dn_2$ Ds $D_{10}$ $M_{3.4}$(*inf. lin.* as in text).₅ यत्; T G कः (for यः). — $^{e}$) $K_3$ $D_6$ $T_2$ $G_{1.2.5}$ वोढव्यो (for वोढव्ये). $K_{1.2}$ वोढव्ये धुर्यनडुहन् ($K_1$m धुर्यवहनं); $K_4$ $D_{2-4.9}$ वोढव्ये धुर्यवत्कुर्वन् ($D_2$ °वत्तत्र); B $Dn_2$ Ds $D_{10}$ अनड्वानिव वोढव्ये ($Dn_2$ °व्यं; Ds $D_{10}$ °व्यो); $Dn_1$ $D_{6.8}$ वोढव्ये ($D_6$ °व्यो) दुर्जनद्वारं; $D_1$ वोढव्यधुर्यनडुवान्; $G_3$ वोढव्येषु व्यनुडुहं; $G_4$ उधव्योन्धुर्यनं धूवन्. Ca.d cite सोढव्ये (Cd °व्यो) धुर्यनडुद्वत्, Cn अधुर्यवत्, Cnp अनड्वानिव. Some of the Bombay ed., following Cn, have अधुर्यवच्च वोढव्ये, a reading *not* found in any MS.! — $^{f}$) $D_{3.4.9}$ च (for तत्).

34 $^{d}$) $B_{2.3}$ न (for का).

35 $^{a}$) $K_3$ transp. जातु and कुले. — $^{b}$) $G_3$ om. यः. — $^{c}$) $K_{3.4}$ B D (except $D_{1.7}$) T $G_4$ अनुचरः ($D_{3.4.9}$ °चरन्); $G_5$ अनुसरन् (for अनुधुरं). — $^{d}$) Ds तज्जिजीवितुम्; $D_{8.10}$ तन्न जीवितुम् (for तात जीवितुम्).

36 $^{b}$) $K_{1.2}$ $D_7$ परिमाणतः; B $D_{3.4.9}$ शाश्वतं परं; $T_2$ प्रतिशाश्वतं; $G_{2.5}$ भूरि शाश्वतं. — $^{c}$) $K_{1.2}$ $D_{6.7}$ पूर्वं (for पूर्वैः). $K_3$ $D_{3.4.9}$ S पूर्वतरं; Ds पूर्वतर-; $D_1$ पूर्वोत्तरं (for पूर्वतरैः). — $^{d}$) T G (except $G_4$) $M_{2.5}$ परं (for परैः). — After 36, N ($K_5$ missing) ins.:

506* शाश्वतं चाव्ययं चैव प्रजापतिविनिर्मितम् ।

37 =(var.) 5. 125. 18. — $^{a}$) $K_{1.2}$ $D_6$ $T_1$ $G_1$ इहायातः; $D_{3.4.9}$ अहो जातः. Ca.d.s cite आजातः. — $^{b}$) K ($K_5$ missing) $D_{1.7}$ सर्वधर्मवित्; $B_{1.4.5}$ Dn $D_{6.10}$ क्षत्रकर्म°; $B_3$ सर्वकर्म°. — $^{c}$) $D_{3.4.9}$ वृत्तिमसंवीक्ष्य; $T_2$ $G_{2.5}$ वृत्तिं ($G_5$ °त्ति-) समीक्ष्यैव; $G_3$ M वृत्ति($G_3$ °त्तिः)-समीक्षो वै; Cn as in text. — $^{d}$) = $38^{d}$. $G_5$ न नमेत्कस्य जातुचित्.

38 =5. 125. 19. — $D_1$ $G_3$ $M_2$ om. (hapl.) 38. — $^{b}$) $K_{1.2}$ $B_3$ उद्यमे (for उद्यमो). — $D_2$ om. $38^{cd}$. — $^{c}$) $Dn_1$ (m as in text) $D_{1.7}$ अथ; Cn अप- (for अपि). — $^{d}$) = $37^{d}$. B (except $B_3$) Dn Ds $D_{3.4.6.8.10}$ $G_1$ नमेतेह; $G_2$ नमेदेव (for नमेदिह).

39 $^{a}$) $D_{3.4.9}$ यः (for च). $K_{1.2}$ मातंगो मत्तक इव; $G_5$ मातंग इव चर्यासु; $M_4$ (*inf. lin.*) मातंगो ह्युत्तम इव. — $^{b}$) $K_{1.2}$ $T_2$ $G_{1.2.4}$ वरीयान्; $D_7$ गरीयान्; $G_5$ स्वतंत्रः; Ca.d.s परीयात् (as in text). $K_3$ B Dn Ds $D_{3.4.6.8.10}$ स; $G_5$ च (for सु-). — $^{c}$) $K_1$ नमन्नित्यं. — $^{d}$) $K_4$ $D_{3.4.9}$ परंतप; S च संजय.

40 $^{a}$) $K_{1.2.4}$ $D_{2-4}$ $G_3$ नियच्छेद्; $B_2$ नियमेद् (for नियच्छन्). — $^{b}$) $G_5$ विनयन्. $K_4$ $B_3$ $D_7$ सर्वदुष्कृतं; S (except $M_{1.2}$) °दुष्कृतान्; Ca as in text. Cd.s cite दुष्कृतः. — $^{d}$) $B_3$ चरेत् (for भवेत्).

Colophon missing in $D_5$; $K_5$ om. it. — *Sub-parvan:* $K_{3.4}$ $B_{1.3}$ $D_{7.10}$ $T_1$ $G_{1.4.5}$ M भगवद्यान ($T_1$ $G_1$ °वत्प्रतियान); to it $K_3$ adds विदुरोपाख्यान; $K_4$ विदुरापुत्रानुशासन; $B_{1.3}$ विदुलापुत्रानुशासन; $D_7$ विदुरानुशासन; $M_{1.2}$ विदुरापुत्रसंवाद. $K_{1.2}$ $B_{2.4.5}$ Dn Ds $D_{1.2.6.8}$ $M_2$ (all om. sub-parvan name) mention

# १३३

पुत्र उवाच ।

कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वैरप्रज्ञे ह्यमर्षणे ॥ १
अहो क्षत्रसमाचारो यत्र मामपरं यथा ।
ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ॥ २
किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ३

मातोवाच ।

सर्वारम्भा हि विदुषां तात धर्मार्थकारणात् ।
तानेवाभिसमीक्ष्याहं संजय त्वामचूचुदम् ॥ ४
स समीक्ष्यक्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ।
असंभावितरूपस्त्वं सुनृशंसं करिष्यसि ॥ ५
तं त्वामयशसा स्पृष्टं न ब्रूयां यदि संजय ।
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ॥ ६

C. 5. 4587
B. 5. 135. 8
K. 5. 135. 8

only विदुला($K_{1.2}$ $D_{1.2}$ $M_2$ °रा)पुत्रानुशासन ($B_{2.4}$ $M_2$ °पुत्रसंवाद). — *Adhy. name:* $T_1$ $G_{1.4}$ कुन्तीवाक्ये ($G_4$ °क्य-) विदुरा($G_4$ °र)सृंजयसंवादः; $G_{2.5}$ परप्रवणनिन्दनं. — *Adhy. no.* (figures, words or both): $D_6$ 24 (=124); $D_7$ $T_2$ $M_{1-3.5}$ 135; $T_1$ $G_{2.4.5}$ 136; $G_1$ 137; $G_3$ 133; $M_4$ 134. — *S'loka no.:* Dn $D_8$ 40.

## 133

☞ This adhy. is missing in $K_5$ (cf. v.l. 5. 131. 1). The MS. is mostly ignored hereafter.

1 $K_4$ $B_{1.3.4}$ संजयः; $D_{3.4.9}$ पुत्रकः; S सृंजयः (for पुत्रः). — $^a$) $B_{1.3}$ कृष्णायसम्; Ca. d. s कृष्णायसस्य (as in text). $K_{1-3}$ $D_7$ [ए]व च; $D_1$ S बत; $D_{3.4.9}$ [इ]व हि (for [इ]व चं). — $^b$) $K_{1-3}$ Dn $D_{2-4.6-9}$ $M_{3-5}$ संहृत्य; T G °हत्या; Ca. d. n. s °हत्य (as in text). $Dn_1$ वचनं (for हृदयं). — $^{cd}$) $K_4$ B D (except $D_{1.2}$) वीरप्रज्ञे. $K_1$ (before corr.).$_2$ ह्यकर्मणि; $K_2$ m.$_3$ $B_{1-4}$ $D_{1.2.7}$ ह्यमर्षि($B_2$ $D_2$ °र्ष)णि; $B_5$ $D_{3.4.8.9}$ [अ]त्यमर्षिणि; $D_{6.10}$ $T_2$ $G_{2.3.5}$ M [अ]त्यमर्षणे. $T_1$ $G_{1.4}$ मातस्त्वकरुणे वैरप्रज्ञे नित्यममर्षणे.

2 $^b$) $K_4$ $B_{2.4.5}$ Dn Ds $D_{6.8.10}$ मामितरं; $D_{3.4.9}$ मातः परं (for मामपरं). — After $2^{ab}$, B Dn $D_{3.4.9}$ ins.:

507* नियोजयसि युद्धाय परमातेव मां तथा ।
[ $D_{3.4.9}$ शूर° (for पर°). B यथा (for तथा). ]

— $^c$) $D_{3.4.9}$ $G_{4.5}$ ब्रूया (for ब्रूयाद्). — $^d$) $K_4$ Ds $D_{1.10}$ एककं; $D_2$ एकजित्; Ca. d. s एकजम् (as in text).

3 =5. 131. 36. — $^b$) $K_{1.2}$ $D_{1.7.10}$ ह्यपि (for अपि). $G_{3.4}$ सर्वथा (for °या). $G_2$ पृथिव्या सर्वयापि वा. — $^c$) $K_3$ $B_{2.4.5}$ Dn Ds $D_{1.2.6.8.10}$ °कृत्येन; $D_{3.4.9}$ °कृत्यैस्ते. — $^d$) $G_2$ भृत्यैः (for भोगैः). — After 3, $K_4$ Dn $D_{3.4.8-10}$ ins.:

508* मयि वा संगरहते प्रियपुत्रे विशेषतः ।;

while $D_6$ ins.:

509* मोहात्संगर्हसे मातः प्रियं पुत्रं विशेषतः ।

4 $D_7$ $M_{1.2}$ विदुरा (for माता). — $^a$) $K_3$ $B_5$ Dn $D_{6.8}$ $G_4$ सर्वावस्था ($Dn_1$ °स्थं); Cnp सर्वारम्भा (as in text). — $^b$) $K_{1.2}$ $D_{1.2}$ °कामतः; $D_{3.4.9}$ °कारणं. — $^c$) $B_{3.5}$ Dn $D_{3.4.9}$ तावेव; $D_1$ तदेव (for तानेव). $K_3$ $D_7$ तानेवाहं ($D_7$ तानेवेह) समीक्ष्याद्य; S ताने($G_1$ °वे)वाहमभिप्रेक्ष्य. — $^d$) $B_{1.4}$ समये; S सृंजय (for संजय). $K_{1-3}$ $D_7$ त्वामनूनुदं.

5 $^a$) $D_{3.4.9}$ समीक्ष्यस्व; $D_7$ समवेक्ष्य-; $T_2$ $G_2$ स त्वं वीर्य-; $G_5$ सुसंवीक्ष्य-; $M_1$ (*inf. lin.*) असमीक्ष्य-; $M_{3.5}$ सुसमीक्ष्य-. — $^b$) $K_4$ $D_9$ युद्ध-; $Ds_2$ $D_7$ $G_4$ मुख्य- (for मुख्यः). — $^c$) $Dn_1$ Ds $D_7$ चिद्; $D_{3.4.9}$ एव; $D_{6.8}$ तद् (for चेद्). — $^d$) $K_{1.2}$ $D_{1-4.7.9}$ प्रतिपत्स्यसे. — $^e$) Dn $D_8$ $M_2$ सुसंभावित°; Cn as in text. — $^f$) $K_3$ $B_{2.5}$ $D_{3.4.6.9.10}$ Cn आनृशंस्यं ($K_3$ °सं); $B_{1.4}$ सुनृशंस्यं; $B_3$ नृशंसवत्; $T_1$ $G_{1.4}$ नृशंसः किं; $G_3$ नं नृशंसं (for सुनृशंसं).

6 $^b$) S सृंजय (for सं°). — After $6^{ab}$, $G_5$ ins.:

510* अहमेव भवेयं ते रिपुरत्यन्तरो महान् ।

— $^c$) $K_4$ खर°; $G_{1.3.5}$ $M_1$ (*inf. lin.*) परि°; Ca. s खरी° (as in text). S त्वां (for तत्). $D_{3.4.9}$ खरीमिवान्यामाहुस्ते. — $^d$) $T_2$ $G_2$ निःसमर्थं; Cs असामर्थ्यं; Ca. d as in text. $G_3$ M Cs अहैतुकं; Ca. d as in text. $D_{3.4.9}$ निःसामर्थ्यामहैतुकीं.

7 $^b$) $D_{3.4.9}$ नित्यं (for त्यज). — $^c$) $K_{1-3}$ $D_7$ महत्येषा; $K_4$ $B_{3.5}$ $D_1$ °त्यो हि; $D_{3.4.9}$ °त्यो वै (for

C. 5. 4587
B. 5. 135. 8
K. 5. 135. 8

सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ।
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ॥ ७
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ।
धर्मार्थगुणयुक्तेन नेतरेण कथंचन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ॥ ८
यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि मोघं तस्य प्रजाफलम् ॥ ९
अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ॥ १०
युद्धाय क्षत्रियः सृष्टः संजयेह जयाय च ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ।
जयन्वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ॥ ११
न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ।
यदमित्रान्वशे कृत्वा क्षत्रियः सुखमश्नुते ॥ १२
मन्युना दह्यमानेन पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून्प्रतिजिगीषया ॥ १३
आत्मानं वा परित्यज्य शत्रून्वा विनिपात्य वै ।
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥ १४
इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥ १५
प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥ १६

पुत्र उवाच ।

नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।
कारुण्यमेवात्र पश्य भूत्वेह जडमूकवत् ॥ १७

मातोवाच ।

अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।

---

°त्यस्ति). — $^{d}$) K ($K_{5}$ missing) $B_{3.5}$ $D_{3.4.9}$ याम् ($K_{3.4}$ $B_{3}$ या) इमाः (for यामिमां). $D_{1}$ याभिः संशयितं जगत्.

8 $^{a}$) $K_{1.2}$ $D_{1}$ यन्मद्धितं तु ($D_{1}$ च) त($D_{1}$ य)द्वृत्तं; $D_{2}$ यस्माद्दत्ता सुदुर्वृत्तं; $D_{3}$(m as in text).$_{4}$ तद्येधीतं तु सद्वृत्ते; $D_{9}$ यद्योधितं तु सद्वृत्तं; S यद्वृत्ति($G_{5}$ $M_{3-5}$ °द्धि)मांश्च ($M_{1}$ °स्त्वं) सद्वृत्तः. — $^{b}$) $B_{2}$ $D_{3.4.6-10}$ $G_{2}$ (by corr.) भव (for भवेः). — $^{d}$) $T_{1}$ $G_{2.4}$ कदा° (for कथं°). — $^{e}$) $K_{1.2}$ $B_{3}$ $Ds_{1}$ $D_{7.9}$ $G_{3.4}$ देव°.

9 $^{a}$) $D_{8}$ ह्येनम् (for ह्येवम्). S अपनीतेन. B श्रुतशीलवि°. — $^{c}$) $K_{1.4}$ $D_{3.4.9}$ वापि (for चापि). — After $9^{c}$, B Dn Ds $D_{6-8.10}$ ins.:

511* दुर्विनीतेन दुर्धिया ।
रमते यस्तु पुत्रेण.
[ (L. 2) Ds यस्य (for यस्तु). ]

— $^{d}$) Ds घोरं (for मोघं).

11 $^{b}$) S (mostly) सृंजयेह. $G_{1.4}$ जयाय($G_{1}$ °या-)-विजयाय च. — $11^{cd}$=5. 130. $7^{ef}$. — $K_{4}$ B Dn Ds $D_{1-4.6.9.10}$ om. $11^{cd}$. — $^{e}$) $K_{4}$ Ds $D_{9}$ $M_{3.5}$ जयं वा; $D_{7}$ जयित्वा (for जयन्वा). — $^{f}$) $K_{3}$ प्राप्नुहींद्रस°; $D_{7}$ संप्राप्नोतींद्रलोकतां.

12 $^{a}$) $G_{3}$ चैव (for पुण्ये). — $^{b}$) $D_{9}$ विद्धि (for दिवि). — $^{c}$) $Dn_{2}$ $D_{1.6}$ $G_{3}$ $M_{5}$ यदि मित्रान्; $G_{4}$ यद्यमित्रान्. $D_{6.8}$ रणे हत्वा (for वशे कृत्वा). — $^{d}$) $K_{4}$ B D (except $D_{1.7}$) एधते (for अश्नुते).

13 $^{ab}$) $M_{3-5}$ दह्यमानस्य पुरुषस्य (corrupt). — $^{c}$) $D_{3.4.9}$ निःकृतेनैव (for निकृतेनेह). — $^{d}$) $B_{1.2.4}$ $Dn_{2}$ $D_{7}$ S °जिगीषता.

14 $^{a}$) $K_{1.2}$ वै; $D_{7}$ सं- (for वा). B आत्मा ($B_{3}$ अर्थो) वापि परित्याज्यो. — $^{b}$) Dn Ds $D_{1.2.6.8.10}$ शत्रुं; $K_{1.2}$ $D_{2}$ वाप्यनिपात्य; $K_{4}$ वापि विजित्य; $D_{3.4.9}$ चापि निपात्य; $T_{1}$ वै विनिपात्य; $G_{5}$ युधि निपात्य (for वा विनिपात्य). Dn Ds $D_{6.8.10}$ $T_{1}$ च (for वै). B ($B_{2}$ damaged) निग्राह्या शत्रवोपि वा. — After $14^{ab}$, $D_{3.4.9}$ ins.:

512* यत्सुखं प्राप्यते तेन न तदन्यत्र विद्यते ।;

while $D_{8}$ ins.:

513* प्राप्यते नेह शान्तिर्हि नित्यमेव तु संजय ।

15 $^{a}$) $T_{1}$ $G_{1}$(before corr.).$_{4}$ [ऽ]ति- (for हि). — $^{c}$) $Dn_{1}$ $D_{9}$ $M_{2}$ स्वल्पप्रियं; $T_{1}$ G (except $G_{3}$) [अ]स्वल्पं प्रियं. Ca.d cite स्वल्पं and प्रियं.

16 $^{a}$) $D_{3.4.9}$ हि (for च). — $^{c}$) $K_{1.2.4}$ $D_{8}$ $G_{4}$ वा (for च). S आप्नोति; Cs अभ्येति (as in text). $D_{3.4.9}$ निर्भयं पदमाप्नोति. — $^{d}$) S प्राप्य (for गत्वा).

17 $M_{1.2}$ सृंजयः (for पुत्र उ°). — $^{c}$) $K_{1}$ $D_{8}$ पश्य त्वं; $K_{2}$ $D_{9}$ [अ]नुपश्य त्वं (hypermetric!); $B_{3}$ [अ]नुपश्य; $D_{2}$ [अ]नुपश्यन्; $D_{3.4}$ [आ]नृशंस्यं; $D_{7}$ [अ]नुभव; $T_{1}$ $G_{1.4}$ कर्तव्यं; $T_{2}$ $G_{2.3.5}$ तद्दृश्यं; M संदृश्यं (for [अ]त्र

चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते ॥ १८
अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।
अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते ॥ १९

पुत्र उवाच ।

अकोशस्यासहायस्य कुतः स्विद्विजयो मम ।
इत्यवस्थां विदित्वेमामात्मनात्मनि दारुणाम् ।
राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतेः ॥ २०
ईदृशं भवती कंचिदुपायमनुपश्यति ।
तन्मे परिणतप्रज्ञे सम्यक्प्रब्रूहि पृच्छते ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ २१

मातोवाच ।

पुत्रात्मा नावमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥ २२
अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ।
सर्वेषां कर्मणां तात फले नित्यमनित्यता ॥ २३
अनित्यमिति जानन्तो न भवन्ति भवन्ति च ।
अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ॥ २४
ऐकगुण्यमनीहायामभावः कर्मणां फलम् ।
अथ द्वैगुण्यमीहायां फलं भवति वा न वा ॥ २५
यस्य प्रागेव विदिता सर्वार्थानामनित्यता ।

C. 5. 4609
B. 5. 135. 28
K. 5. 135. 28

---

पश्य). — [d]) D2.7 G5 इव; T2 G2 एव (for इह). T1 G1.4 मात्रा पुत्रहितेच्छया.

18 M1.2 विदुरा (for माता). — [a]) Dn1 D9 भूयसा; Cn भूयसी (as in text). K1–3 D2.3.9 M (M1 *inf. lin.*) निंदा; B3 प्रीतिः; D3.4 तंद्रा; G1.3.5 M1 Ca.d नंदी; G2 नांदी; Cs नंदिः (as in text). — [b]) D8 यदि; Cs यत् (as in text). — G3 om. 18[c]–20[b]. — [c]) K1.2 D7.8 G5 मा; K3 वै; G4 M वा; Cs मां (as in text). D2 चोदयस्वेति; D3.4 चोदयन्नद्य; D8 नोदयस्वैतद्; M चोदयस्वैतद्. Ca.d.s cite चोदयसि. T2 अचोद्या मां चोदय वै. — [d]) D3.4 सं- (for वै).

19 G3 om. 19 (cf. v.l. 18). — [a]) B5 D7.10 अहं (for अथ). T1 G5 M3–5 त्वा; M1.2.4 (*inf. lin.*) चा (for त्वां). D3.4 चोदयि°; Cs पूजयि° (as in text). — [b]) M वा (for वै). K1–3 D2.7.9 हतान्दृष्ट्वाद्य (D7 °ष्ट्वा च) सैंधवान्; D1 हतं दृष्ट्वाभिसैंधवं; D3.4 हत्वैतानिह सैंधवान्. — [d]) B1–3 Dn2 Ds D3.4.6–8.10 Ca.d.n.s कृच्छ्र- (for कृत्स्नं). B3.5 Dn2 D2.10 Cn भावितं; Ca.d.s भाविनं (as in text). D1.2.7 अद्य (for एव). D1.2 वै; Cs ते (as in text).

20 G3 om. 20[ab] with the ref. (cf. v.l. 18). B2.5 D3.4 पुत्रकः (for पुत्रः). — [a]) Some N MSS. अकोषस्य. — [b]) K2 D9 कुतश्चिद्; B1.3.4 कुतश्च; B2 damaged; D7 कुतोस्ति; G5 कुतस्तद्; K3.4 B5 Dn Ds D2–4.6.8.10 कुतः सिद्धिर्जयो मम; T1 G1.4 कुतः शत्रुजयो भवेत्. — [c]) K3 B5 Dn D1 एताम्; K4 Ds D6.8.10 एनाम्; B2 damaged; D3.4 एव (for इमाम्). — [d]) Ds2 D1–4.8 दारुणं. D6 आत्मनात्मविदारणं. — [e]) D2.8 राज्याभावो; D3.4 राज्यभावो; G3 राजभावो. — [f]) Ds एव (for इव). K3 B (except B2) Dn2 Ds D1.6 T1 G3.4 दुष्कृतः; D3.4 °ती; Ca °तेः (as in text).

21 [a]) K2 ईदृशीं; T1 G1.4.5 कीदृशं. K1.2 Dn1 D1.7.9 G4.5 किंचित्. — [b]) B1.2.4 उपायं यदि पश्यति. A few MSS. °पश्यसि. — [c]) Ds1 D7.10 M2 तं मे (for तन्मे). S (except M4) तन्मेपरिमितप्र(G3 °प्रा)ज्ञे. — [e]) D10 °ष्यथ (for °मि हि). D10 S ते (for तत्). D3.4 तत्करिष्यामि ते सर्वं. — [f]) = 5. 134. 15[d].

22 M1.2 विदुरा (for मातो°). — [a]) K4 B D (except D7.9) transp. आत्मा and न. — [b]) K1.2 D7–9 सर्वा° (for पूर्वा°). — [c]) K3 D10 T1 G1.3.5 M2 अपि; G4 अभि-; M1 वि- (for हि). — [d]) D7 भूत्वापि न भवंति वै.

23 [a]) K1 T2 G2 चाप्यर्थः; T1 G1.3.5 M1.2.4 नाप्यर्थाः (G5 °र्थः); M3.5 माप्यर्थाः (for चाप्यर्थाः). — [b]) K1 T2 G2.5 ना(G5 आ)रब्धव्यः; T1 G1.3 M (except M3) आरब्धव्याः. T1 तु बालिशैः; T2 G2 स्वभावतः; G1 M1.2.5 स्वबालिशैः; M4 स्वबालिशैः.

24 G5 om. (hapl.) 24[a]–26[b]. — [a]) K1.2 D3.4 अपि; D2 अव- (for इति). — [b]) K (K5 missing) D1.8 T G1.2.4 transp. न and भवन्ति. Cs as in text. — [d]) T1 G4 न वै (for नैव). T2 G2 च (for ते).

25 G5 om. 25 (cf. v.l. 24). — [a]) K1.3 Dn1 Ds2 D2–4.6–8 G4 M2.4 एक°; D9 ऐक्य°; Ca.d.n.s ऐक° (as in text). — [b]) M मा तावत् (for अभावः). — [c]) B3 D9 M4 (*inf. lin.*) वैगुण्यं; Ca.d.s द्वैगुण्यं (as in text).

26 G5 om. 26[ab] (cf. v.l. 24). — [a]) B2 damaged. B3 D3.4.8.9 Cs विहिता; Cd °दि° (as in text). — [c]) Dn1 D8 न चेत्; Ds T1 G3.4 M1.2 वदेत्; D9 विदेत्; T2 G2.5 वदे; Ca.d.n.s नुदेत्; (as in text). K1.2 Ca

C. 5. 5191
B. 5. 153. 4
K. 5. 153. 4

संभ्रमे तुमुले तस्मिन्यदासीत्कुरुजाङ्गले ॥ ४
व्यथयेयुर्हि देवानां सेनामपि समागमे ।
पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ॥ ५
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथः ।
युयुधानश्च विक्रान्तो देवैरपि दुरासदः ॥ ६
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कुरूणां पाण्डवानां च यद्यदासीद्विचेष्टितम् ॥ ७

वैशंपायन उवाच ।

प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा ।
कर्णं दुःशासनं चैव शकुनिं चाब्रवीदिदम् ॥ ८
अकृतेनैव कार्येण गतः पार्थानधोक्षजः ।
स एनान्मन्युनाविष्टो ध्रुवं वक्ष्यत्यसंशयम् ॥ ९
इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः ।
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ ॥ १०
अजातशत्रुरप्यद्य भीमार्जुनवशानुगः ।
निकृतश्च मया पूर्वं सह सर्वैः सहोदरैः ॥ ११
विराटद्रुपदौ चैव कृतवैरौ मया सह ।
तौ च सेनाप्रणेतारौ वासुदेववशानुगौ ॥ १२
भविता विग्रहः सोऽयं तुमुलो लोमहर्षणः ।
तस्मात्सांग्रामिकं सर्वं कारयध्वमतन्द्रिताः ॥ १३
शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः ।
सुपर्याप्तावकाशानि दुरादेयानि शत्रुभिः ॥ १४
आसन्नजलकाष्ठानि शतशोऽथ सहस्रशः ।
अच्छेद्याहारमार्गाणि रत्नोच्चयचितानि च ।
विविधायुधपूर्णानि पताकाध्वजवन्ति च ॥ १५
समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः ।
प्रयाणं घुष्यतामद्य श्वोभूत इति माचिरम् ॥ १६
ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा ।
हृष्टरूपा महात्मानो विनाशाय महीक्षिताम् ॥ १७
ततस्ते पार्थिवाः सर्वे तच्छ्रुत्वा राजशासनम् ।
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः ॥ १८
बाहून्परिघसंकाशान्संस्पृशन्तः शनैः शनैः ।

---

— $^{b}$) B Dn1 Ds D6. 10 महामते (for तपो°). — After $4^{ab}$, K3 D8 read $7^{cd}$. — $^{c}$) D3. 4 G1. 4. 5 संग्रामे (for °भ्रमे). A few N MSS. तुमले. — $^{d}$) G4 यथा°; M2 यत्रा° (for यदा°). K (except K4) Ds1 D1. 7 °जंगले.

5 T2 G2. 3 M4 om. 5 (cf. v.l. 4). — $^{ab}$) K5 सैन्यान्यपि (for सेनामपि). B Dn1 Ds D3. 4. 6. 8. 10 इमे (D3. 4 हि ते) देवान्सेंद्रानपि (for हि देवानां सेनामपि). — $^{d}$) G5 M3. 5 तदा (for तथा).

6 T2 G2. 3 M4 om. 6 (cf. v.l. 4). — $^{b}$) K4 °बलः (for °रथः). — $^{c}$) B2. 4. 5 Dn1 Ds D6. 8. 10 युधामन्यु° (for युयुधान°). K4 चेकितानो (for च विक्रान्तो). — $^{d}$) B3. 5 दुरुत्सहः (for दुरासदः).

7 K3 D8 read $7^{cd}$ after $4^{ab}$. — $7^{ab} = 4^{ab}$. — $^{c}$) B5 पांडवानां कुरूणां च (= 5. 146. $25^{c}$). — After 7, B (except B3) Dn1 Ds D6. 10 ins. an addl. colophon (ignored in the old printed ed.!).

8 $^{a}$) K1. 2. 5 D2. 7 प्रतिप्रयाते; B3. 5 अभियाते तु. — $^{b}$) G3 राजन् (for राजा). D2–4 ततः; G3. 4 तथा (for तदा).

9 $^{c}$) K (except K2) Dn1 Ds2 D7. 8 स एतान्; D3. 4 ससैन्यं; S अदानान् (G3 अथास्मान्) (for स एनान्). Ca cites एनान्. — $^{d}$) B Dn1 D2–4 T G (except G5) धक्ष्यति; Ds धुक्ष्यति (for वक्ष्यति). K (except K4) D1. 2. 7. 10 असंमतं; M3. 5 असंशमं (for असंशयम्).

11 $^{a}$) K (except K4) D7 चाप्यद्य; B Dn1 Ds D10 अत्यर्थं; T2 G2. 5 अप्यत्र (for अप्यद्य). — $^{b}$) B (except B5) Dn1 T1 भीमसेनवशा°. — D1 om. (hapl.) $11^{c}$–$12^{d}$.

13 $^{b}$) A few N MSS. तुमलो. S रोमहर्षणः. — $^{d}$) K4 अरिंदमाः (for अतन्द्रिताः).

14 $^{c}$) K1. 3 D2. 6–8 G3 अ°; B Dn1 स्व° (for सु°). — $^{d}$) B2 दुराधर्षाणि; D2 Ca °दानानि (for °देयानि).

15 $^{a}$) B4. 5 Cn °कोष्ठानि. — $^{b}$) K1. 2. 4. 5 D7. 8 सुगुप्तानि; K3 D2 शिबिराणि (for शतशोऽथ). — K4 om. $15^{cd}$. — $^{c}$) K (K4 om.) B2 Ds D1. 7. 10 Cs °हार्य° (for °हार°). — $^{d}$) B1. 3–5 Ds बंधोच्छ्रय°; B2 Dn1 D6. 7. 19 रत्नोच्छ्रय°; D3. 4 बलौघचरितानि. S °युतानि च. — $^{e}$) G1. 4 विविधानि च पूर्णानि.

16 $^{b}$) D1 अधि; D3. 4 S अपि (for बहिः).

17 $^{a}$) K1. 2. 5 D7 समा° (for प्रति°). — $^{b}$) K4 B3 D3. 4 G3 तदा (for तथा). — $^{d}$) B Dn1 D2–4. 8. 10 निवासाय. K1. 2. 5 D1 T1 महीक्षितः.

18 $^{b}$) D6 कृत्वा (for श्रुत्वा).

काञ्चनाङ्गददीप्तांश्च चन्दनागरुभूषितान् ॥ १९
उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः ।
अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः ॥ २०
ते रथात्रथिनः श्रेष्ठा हयांश्च हयकोविदाः ।
सज्जयन्ति स्म नागांश्च नागशिक्षासु निष्ठिताः ॥ २१
अथ वर्माणि चित्राणि काञ्चनानि बहूनि च ।
विविधानि च शस्त्राणि चक्रुः सज्जानि सर्वशः ॥ २२
पदातयश्च पुरुषाः शस्त्राणि विविधानि च ।
उपजह्रुः शरीरेषु हेमचित्राण्यनेकशः ॥ २३
तदुत्सव इवोदग्रं संप्रहृष्टनरावृतम् ।
नगरं धार्तराष्ट्रस्य भारतासीत्समाकुलम् ॥ २४
जनौघसलिलावर्तो रथनागाश्वमीनवान् ।
शङ्खदुन्दुभिनिर्घोषः कोशसंचयरत्नवान् ॥ २५
चित्राभरणवर्मोर्मिः शस्त्रनिर्मलफेनवान् ।
प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः ॥ २६
योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः ।
अदृश्यत तदा राजंश्चन्द्रोदय इवार्णवः ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

## १५१

वैशंपायन उवाच ।
वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः ।
पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदम् ॥ १
अस्मिन्नभ्यागते काले किं च नः क्षममच्युत । C. 5. 5217 B. 5. 154. 2 K. 5. 154. 2

---

19 $^{b}$) G1. 4. 5 स्पृशंतश्च (for संस्पृशन्तः). T2 G2. 5 शनैस्ततः; G3 ततस्ततः; M ततः शनैः (for शनैः शनैः). — $^{c}$) T2 G2 °हस्ताश्च. — $^{d}$) K2 °गरुभूषितैः; K3 B Dn1 Ds D2–4. 6 G3 °गुरुभूषितान्; K4 D1 T2 G1. 2 °गुरुरूषि°; T1 broken; G5 M1. 2 °गरुरूषि°.

21 $^{a}$) T2 G2. 5 रथिनां (for रथिनः). K1. 2. 5 D7 M2. 5 श्रेष्ठान् (for श्रेष्ठाः). — $^{c}$) K D2. 7 S (except M1. 2) सज्जयंतः. K (except K3) B3 D2. 7 T2 G2. 5 च; T1 G1. 3. 4 [अ]थ; M3–5 [अ]श्व- (for स्म). K (except K4) D7 ते नागान् (for नागांश्च). — $^{d}$) K1. 2 °शिक्षार्थशिक्षिताः; K3. 5 B1–3 D1. 7 °शिक्षासु शिक्षिताः; B4 Dn1 Ds D3. 4. 6. 8. 10 °शिक्षास्वनुष्ठिताः; D2 °शिक्षासु निश्चिताः.

22 $^{a}$) S शस्त्राणि (for चित्राणि). — $^{b}$) S कवचानि (for काञ्चनानि). — K4 om. (hapl.) 22$^{c}$–23$^{b}$. — $^{c}$) D3. 4 वस्त्राणि; S तीक्ष्णानि (for शस्त्राणि). — $^{d}$) B Dn1 Ds D2–4. 6. 10 सर्वाणि (for सज्जानि).

23 K4 om. 23$^{ab}$ (cf. v.l. 22). — $^{a}$) G1. 4 विविधाः (for पुरुषाः). — $^{b}$) G1. 5 कवचानि (for विविधा°). — $^{c}$) K4 B Dn1 D1. 3. 4. 6. 8 उपाजह्रुः.

24 $^{a}$) K D1–4. 7 उत्सवमहो°; T2 G2. 5 M3–5 उत्सवमिवो° (for उत्सव इवो°). — $^{b}$) K D1–4. 7 °नरा- (K3 °जना)कुलं; M1. 2 °जनावृतं.

25 $^{b}$) K3 °नागाश्वमत्स्यवान्; D10 °नागौघमीनवान्. — $^{d}$) A few N MSS. कोष°.

26 Ds om. (hapl.) 26$^{ab}$. — $^{a}$) G5 तत्रा°. — $^{c}$) B3 D6 °मालाभि°; D3. 4 °मालोद°; Ca °मालाद्रि° (as in text). — $^{d}$) D3. 4 रथपण्यामहा°; S (except G3) °ग्रहः.

27 $^{a}$) K5 योधचंद्रोदयोद्धूतः; B5 द्रोणचंद्रोदयोद्भूतः; S (except T1) योगचंद्रोदयोद्भूतः. — $^{b}$) D7 T1 G1. 4. 5 M1. 2 °बलार्णवः; G3 °भवार्णवः. — Ds2 om. (hapl.) 27$^{cd}$. — $^{c}$) K4 B (except B3) Dn1 Ds1 D6. 8. 10 व्यदृश्यत. K (except K4) D1. 2 ततो राजन्; G5 महाराज. — $^{d}$) K1 (m as in text) कुरुराजमहार्णवः (=$^{b}$).

Colophon lost in T1 on a broken fol. Dn2 D5. 9 missing. — *Sub-parvan:* K1. 2. 5 Dn1 D2. 7 अभिनिर्याणयात्रा; K3 पुरनिर्याणयात्रा; K4 B4 Ds D6. 8. 10 अभिनिर्यात्रा; B1–3. 5 अभियात्रा; G5 निर्याणयात्रा; M निर्यात्रा. — *Adhy. name:* G1. 4 M कुरुबलवर्णनं; G5 दुर्योधनबलकथनं. — *Adhy. no.* (figures, words or both): D6 43 (=143); T2 M 153 (M4 152); G1 155; G2. 4. 5 154; G3 151. — *S'loka no.:* K5 28.

**151**

☞ This adhy. is missing in Dn2 (cf. v.l. 5. 143. 2); the MS. is mostly ignored here. T1 reads this adhy. after adhy. 148.

C. 5. 5217
B. 5. 154. 2
K. 5. 154. 2

कथं च वर्तमाना वै स्वधर्मान्न च्यवेमहि ॥ २
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ॥ ३
विदुरस्यापि ते वाक्यं श्रुतं भीष्मस्य चोभयोः ।
कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कात्स्र्न्येन ते श्रुता ॥ ४
सर्वमेतदतिक्रम्य विचार्य च पुनः पुनः ।
यन्नः क्षमं महाबाहो तद्ब्रवीह्यविचारयन् ॥ ५
श्रुत्वैतद्धर्मराजस्य धर्मार्थसहितं वचः ।
मेघदुन्दुभिनिर्घोषः कृष्णो वचनमब्रवीत् ॥ ६
उक्तवानस्मि यद्वाक्यं धर्मार्थसहितं हितम् ।
न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति ॥ ७
न च भीष्मस्य दुर्मेधाः शृणोति विदुरस्य वा ।
मम वा भाषितं किंचित्सर्वमेवातिवर्तते ॥ ८
न स कामयते धर्मं न स कामयते यशः ।
जितं स मन्यते सर्वं दुरात्मा कर्णमाश्रितः ॥ ९
बन्धमाज्ञापयामास मम चापि सुयोधनः ।
न च तं लब्धवान्कामं दुरात्मा शासनातिगः ॥ १०
न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः ।
सर्वे तमनुवर्तन्ते ऋते विदुरमच्युत ॥ ११
शकुनिः सौबलश्चैव कर्णदुःशासनावपि ।
त्वय्ययुक्तान्यभाषन्त मूढा मूढममर्षणम् ॥ १२
किं च तेन मयोक्तेन यान्यभाषन्त कौरवाः ।
संक्षेपेण दुरात्मासौ न युक्तं त्वयि वर्तते ॥ १३
न पार्थिवेषु सर्वेषु य इमे तव सैनिकाः ।
यत्पापं यन्न कल्याणं सर्वं तस्मिन्प्रतिष्ठितम् ॥ १४
न चापि वयमत्यर्थं परित्यागेन कर्हिचित् ।
कौरवैः शममिच्छामस्तत्र युद्धमनन्तरम् ॥ १५
तच्छ्रुत्वा पार्थिवाः सर्वे वासुदेवस्य भाषितम् ।

---

1 $^{b}$) T $G_{2.5}$ °श्रुत्य (for °स्मृत्य).

2 $^{d}$) K (except $K_4$) $D_{1.2.7}$ न च्यवेम स्वधर्मतः.

4 $^{a}$) $D_{3.4}$ तु (for [अ]पि). $K_4$ B $Dn_1$ Ds $D_{3.4.6-8.10}$ तद्वाक्यं. — $^{b}$) Ds $D_{10}$ श्रुत्वा (for श्रुतं). — $^{d}$) $T_1$ $G_{1.4}$ कात्स्र्न्येन भवता श्रुता; $T_2$ $G_2$ कात्स्र्न्येनैव च ते श्रुता.

5 $^{a}$) Ds अशेषेण (for अतिक्रम्य). — $^{c}$) $K_4$ B $Dn_1$ Ds $D_{1.6.10}$ (by transp.) क्षमं यन्नो ($B_3$ यन्नः क्षेमं); $D_2$ यत्तु क्षमं; $D_{3.4}$ यत्ते क्षमं. — $^{d}$) $G_3$ तत्र ब्रूहि; $M_{3.4}$ (*inf. lin.* as in text).$_5$ तन्मे ब्रूहि (for तद्ब्रवीहि). $D_7$ अवधार° (for अविचार°). — $K_4$ *repeats* $5^{cd}$ (v.l. क्षमं यत्ते for यन्नः क्षमं).

6 $K_4$ reads $7^{ab}$ for $6^{ab}$, *repeating* it in its proper place. — $^{c}$) $D_7$ M (except $M_1$) °निर्घोषं. — $^{d}$) K (except $K_4$) $D_{1-4.7}$ हृद्यं (for कृष्णो). $K_4$ B (except $B_3$) $Dn_1$ Ds $D_{6.8.10}$ वाक्यमथाब्रवीत् (for वचनम°).

7 Before 7, $K_{1-3.5}$ $B_3$ $D_{1-4.7}$ ins. वासुदेव उ°; $K_4$ $B_{1.2.4}$ $Dn_1$ Ds $D_{6.8.10}$ कृष्ण उ°; $T_2$ श्रीकृष्णः. — $^{a}$) Ds $G_3$ असि (for अस्मि). $G_3$ यत्पापं (for यद्वाक्यं). — $^{d}$) S (except $M_4$) कौरवे (for °व्ये).

8 $^{a}$) $B_{1.3}$ S तु (for च). — $^{b}$) K (except $K_3$) $B_{1-3}$ $D_{1-4.6-8}$ च (for वा). — $^{d}$) S (except $T_1$ $G_1$) सर्वमेतन्निरर्थकं.

9 $^{a}$) $K_4$ B $Dn_1$ Ds $D_{2-4.6.8.10}$ नैष (for न स). — $^{b}$) $K_4$ B Ds $D_{6.8.10}$ नैष; $Dn_1$ नैव; $D_2$ न च (for न स).

10 $^{b}$) $D_{3.4}$ [अ]पि च (by transp.). — $^{c}$) $T_1$ $G_{1.4}$ तत् (for तं). — $^{d}$) $K_4$ B $Dn_1$ Ds $D_{6.8.10}$ °त्मा पापनिश्चयः.

11 $^{c}$) $K_4$ $D_{3.4.7.10}$ $G_{1.3.4}$ M (except $M_5$) तमन्व($G_1$ समन्व-; $G_4$ तमनु)वर्तत; $B_3$ तदनुमोदंत (for तमनुवर्तन्ते). — $^{d}$) K (except $K_4$) $D_7$ $G_5$ $M_1$ अच्युतं; $D_{3.4}$ अप्युत (for अच्युत).

12 $^{a}$) $B_3$ सौबलश्चापि; S सौबलेयश्च (for सौबलश्चैव). — $^{d}$) $G_1$ मूढं (for मूढा). $T_1$ $G_{1.4}$ दृढम् (for मूढम्). $D_7$ अमर्षणाः; $T_1$ $G_4$ अमर्षिणः; $M_1$ (*inf. lin.*).$_2$ अनुव्रताः (for अमर्षणम्).

13 $^{a}$) $K_{1.2}$ ममो° (for मयो°). — $^{b}$) $K_4$ B $Dn_1$ $D_6$ $T_1$ $G_{1.4}$ यान्यभाषत कौरवः. $Ca.s$ cite यान्यभाषंत (as in text). — $^{d}$) $B_2$ युक्तं न (by transp.); Cs as in text.

14 $^{a}$) $K_4$ $B_{2.4.5}$ $Dn_1$ Ds $D_{2-4.6.8.10}$ पार्थिवेषु न (by transp.). — $^{c}$) $K_3$ $D_{3.4}$ S यदकल्याणं; $D_1$ यच्च क°. — $^{d}$) S तस्मिन्सर्वं (by transp.).

15 $^{a}$) $K_3$ $D_{1.7}$ अत्यंतं; $B_3$ Ds $D_{10}$ अप्यर्थं; $Cd.s$ अत्यर्थं (as in text). — $^{b}$) $B_2$ केन° (for कर्हि°). — $^{c}$) K (except $K_4$) $D_{1.2.7}$ शममिच्छाम कुरुभिः.

अब्रुवन्तो सुखं राज्ञः समुदैक्षन्त भारत ॥ १६
युधिष्ठिरस्त्वभिप्रायमुपलभ्य महीक्षिताम् ।
योगमाज्ञापयामास भीमार्जुनयमैः सह ॥ १७
ततः किलकिलाभूतमनीकं पाण्डवस्य ह ।
आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः ॥ १८
अवध्यानां वधं पश्यन्धर्मराजो युधिष्ठिरः ।
निष्टनन्भीमसेनं च विजयं चेदमब्रवीत् ॥ १९
यदर्थं वनवासश्च प्राप्तं दुःखं च यन्मया ।
सोऽयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः ॥ २०
यस्मिन्यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः ।
अकृते तु प्रयत्नेऽस्मानुपावृत्तः कलिर्महान् ॥ २१
कथं ह्यवध्यैः संग्रामः कार्यः सह भविष्यति ।
कथं हत्वा गुरून्वृद्धान्विजयो नो भविष्यति ॥ २२
तच्छ्रुत्वा धर्मराजस्य सव्यसाची परंतपः ।
यदुक्तं वासुदेवेन श्रावयामास तद्वचः ॥ २३
उक्तवान्देवकीपुत्रः कुन्त्याश्च विदुरस्य च ।
वचनं तत्त्वया राजन्निखिलेनावधारितम् ॥ २४
न च तौ वक्ष्यतोऽधर्ममिति मे नैष्ठिकी मतिः ।
न चापि युक्तं कौन्तेय निवर्तितुमयुध्यतः ॥ २५
तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा ।
स्मयमानोऽब्रवीत्पार्थमेवमेतदिति ब्रुवन् ॥ २६
ततस्ते धृतसंकल्पा युद्धाय सहसैनिकाः ।
पाण्डवेया महाराज तां रात्रिं सुखमावसन् ॥ २७

C. 5. 5242
B. 5. 154. 27
K. 5. 154. 27

इति श्रीमहाभारते उद्योगपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

---

16 Before 16, K3–5 Dn1 Ds D1.3.4.6.8.10 ins. वैशंपायन उ°. — $^{b}$) S वासुदेवेन. — D6 om. 16$^{e}$–17$^{b}$.

17 D6 om. 17$^{ab}$ (cf. v.l. 16). — $^{b}$) K4 अभिलप्स्य; B2.4.5 Dn1 Ds D1.8.10 अभिलक्ष्य; B5 अभिलभ्य; M1.2 उपलक्ष्य (for उपलभ्य).

18 $^{a}$) S (except G1 M2) किलिकिला-. K4 D6 -शब्दम् (for -भूतम्). Ca.d.s किलकिलाभूतं (as in text). — $^{b}$) Dn1 D3.4 T2 G2.3.5 पांडवैः सह (for °वस्य ह).

19 $^{c}$) K B Dn1 Ds D6.8–10 निः(*or* नि)श्वसन् (K5 निरीक्षन्); D3.4 अर्जुनं; D7 नकुलं; Ca.d निष्टनन् (as in text). — $^{d}$) D3.4 विलपन् (for विजयं). K4 त्विदम्; D3.4 इदम्; T1 चैवम् (for चेदम्).

20 $^{a}$) B3 D10 G5 M1(*inf. lin.*).2.3.5 °वासं च. — $^{c}$) B3 D8 G3.5 M3–5 उपेत्यैव; D7 T1 G4 उपेत्येव (for उपैत्येव). — $^{d}$) D1 परानंदः; D7 परानर्थः.

21 $^{a}$) K4 B Dn1 Ds D1.3.4.6.10 T G (except G3) तस्मिन्; Ca.d यस्मिन् (as in text). — $^{c}$) K1.2.5 सत्कृते (for अकृते). K5 B3 च; M1.2 [ऽ]पि (for तु). D7 कृतेपि यत्ने अस्मान्वै.

22 $^{b}$) K4 D3.4 स्वार्यैः (for कार्यैः). — $^{c}$) K (except K4) G3 कुरून् (for गुरून्). — $^{d}$) D3.4 नु (for नो).

23 $^{d}$) Ds D1 T1 G1.3 तत्वतः (for तद्वचः).

25 $^{a}$) K5 [अ]ति-; T G (except G3) ते; Ca.d तौ (as in text). D2 पश्यतः; D7 विंदतः; D8 T G1.2.5 M3–5 वक्ष्यते; G4 वर्तते; Ca.d वक्ष्यतः (as in text). — $^{c}$) K4 B Dn1 Ds D6.8.10 नापि युक्तं च; D3.4 नापि युक्तं तु (for न चापि युक्तं). B2 ते राजन् (for कौन्तेय). — $^{d}$) D3.4 निवर्तयितुमद्य वै; S विनिवर्तेत युद्धतः. Ca.d cite अयुध्यतः.

26 $^{c}$) K4 B (except B3) Dn1 Ds D6.8.10 M3–5 वाक्यं (for पार्थं). — $^{d}$) K4 B (for B3 see below) Dn Ds D6.8.10 पार्थमेवम्; B3 G1.2 एवमेवम्; M3–5 पार्थमेतद् (for एवमेतद्). K5 B2 D1–4.7 G3 ध्रुवं (for ब्रुवन्).

27 $^{a}$) K5 D3.4 कृत° (for धृत°). — $^{d}$) D7 सुखमाविशन्; M3.4(*inf. lin.* as in text).5 सुखिनोवसन् (for सुखमा°).

Colophon. Dn2 D5.9 missing. — *Sub-parvan:* K1–3.5 D2 G5 अभिनिर्याणयात्रा; K4 B Ds D6.8.10 M1.2 अभिनिर्यात्रा (B3 अभियात्रा); Dn1 विनिर्यात्रा; D7 निर्याणयात्रा; T1 भगवत्प्रतियान. — *Adhy. name:* G5 M1.2 युधिष्ठिरयुद्ध(M2 om. युद्ध)प्रोत्साहनं. — *Adhy. no.* (figures, words or both): D6 44 (=144); T1 M4 153; T2 M1–3.5 154; G1 156; G2.4.5 155; G3 152. — *S'loka no.:* K5 Dn1 27.

# १५२

C. 5. 5243
B. 5. 155. 1
K. 5. 155. 1

वैशंपायन उवाच ।
व्युषितायां रजन्यां तु राजा दुर्योधनस्ततः ।
व्यभजत्तान्यनीकानि दश चैकं च भारत ॥ १
नरहस्तिरथाश्वानां सारं मध्यं च फल्गु च ।
सर्वेष्वेतेष्वनीकेषु संदिदेश महीपतिः ॥ २
सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।
सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सपोथिकाः ॥ ३
सध्वजाः सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिस्तराः ॥ ४
सकचग्रहविक्षेपाः सतैलगुडवालुकाः ।
साशीविषघटाः सर्वे ससर्जरसपांसवः ॥ ५
सघण्टाफलकाः सर्वे वासीवृक्षादनान्विताः ।
व्याघ्रचर्मपरीवारा वृताश्च द्वीपिचर्मभिः ॥ ६
सवस्तयः सशृङ्गाश्च सप्रासविविधायुधाः ।

## 152

☞ This adhy. is missing in Dn2 (cf. v.l. 5. 143. 2); the MS. is mostly ignored here.

1 a) K4 B (except B2) Dn1 Ds D6-8.10 व्युष्टायां वै (B4 तु) (for व्युषितायां). Ca cites व्युष्टायां. K4 B5 Dn1 Ds D6.7 हि; B4 D8 वै (for तु). — b) K1.2 B (except B4) D1.7 T G1.2.4 तदा (for ततः).

2 c) K5 D7 S (except G1) तेषु (for [ए]तेषु). K3 सैन्येषु (for [अ]नीकेषु). — d) K4 Dn1 Ds D6.8.10 नराधिपः (for मही°).

3 a) G3 सधनुष्काः; Ca.d.s सानुकर्षाः (as in text). T2 G2 समीनीकाः; Ca.d.s सतूणीराः (as in text). — d) K1-3.5 B5 D1.2 सपावकाः; K4 B3.4 Dn1 Ds D6.8.10 °हर्ष्टिकाः; B2 G4 °सायकाः; D3.4 °यंत्रकाः; D7 °सेवकाः; T2 G2.5 °गोधिकाः; G3 °नायकाः (for °पोथिकाः). Ca.d cite पावकः.

4 b) D3.4 सशरत्सरु°; T G M1 (*inf. lin.*) °सायकाः; Ca.s as in text. — c) D3.4 रज्जुभिर्विविधाभिश्च. — d) K B2.4 Ds D1-4.6-8.10 G3 Cn °परिच्छदाः (Cnp as in text).

5 a) K5 °कचग्राह°; G3 °चक्रग्रह°; Cs.np °करग्रह°; Ca.d as in text. — c) D3.4 चैव (for सर्वे). — d) A few MSS. °पांशवः.

6 a) B1.4.5 D1.3.4 T1 G1 Cn सघंट°; T2 सघृष्टि°; G2 सपुष्टि°. D7 सकीलक्रकचाः सर्वे (=line 5 of 543*). Ca.d.s cite घंटाफलकं. — After 6a, K (K3.4 om. lines 4-5) B Dn1 Ds D2.6.8.10 ins.:

543* सायोगुडजलोपलाः ।
सशालभिन्दिपालाश्च समधूच्छिष्टमुद्गराः ।
सकाण्डदण्डकाः सर्वे ससीरविषतोमराः ।
सशूर्पपिटकाः सर्वे सदात्राङ्कुशतोमराः ।
सकीलक्रकचाः सर्वे.

[(L. 1) D8 सप्रासलगुडोपलाः. Ca.d cite अयोगुडः. — (L. 2) K1-3.5 Ca.d ससार-; B3 Ds1 D8.10 Cnp सशूल- (for सशाल-). ❀Nil: सशूलेति गौडपाठः।❀ — (L. 3) K1 सदंडकाष्टकाः; K2.3.5 B2 D2.7 Ca.d.s.np सदंडकंटकाः (for सकाण्डदण्डकाः). K3 सदाशंकुसरोधसः; K4 D7 सशीरविषतोमराः; D6.8 सशार°. Ca.d.s cite सीर°. — (L. 4) K1.2.5 Ds D6.7 ससूर्प°; B3 सगुल्मविटपाः; B4 सगुल्मपिटकाः. Ca cites गुल्मपिटके, Cd सूर्यपिटके, Cs शूलपिटकं. K1.2.5 B (except B5) D2 Ca.d °रोधसः (for °तोमराः). — (L. 5) B1.4.5 °कवचाः; Ca.d.np °क्रकचाः (as above).]

— K4 om. 6bcd. — b) K1 वासो भक्ष्यो°; K3.5 B D2 Cn वाशीवृक्षा°; Dn1 वायुवृक्षा°; D1 वामवृक्षा°; D3.4 सयंत्रांकुशतोमराः; D10 वास्यवृक्षादनान्विताः; S वासिवृक्षादनीयु(G3 °वृ-; G5 °कृ-; M °धृ)ताः. Ca.d.np cite वासी, and Ca.d वृक्षादनं. — S reads 6cd after 7. — c) B2.3 D2-4 °परीधाना. — d) B1.4 Dn1 Ds D6.8.10 द्वीपिचर्मा(Ds1 D6.8 °र्मे)वृताश्च ते; S वृता गोद्वीपिचर्मभिः

7 a) K4 सत्सूर्यः (sic); B (except B2) Dn1 Ds D3.4.6-8.10 G5 सहष्टयः (for सवस्तयः). Ca.d cite बस्तिः, Cs ऋष्टिः. — b) K4 D6.7 सप्राश; D10 G5 सप्राश. Ca.d cite प्रासः. — c) G3.4 M4 (*inf. lin.*) सकुंतालाः; M3-5 सकुंदालाः (for सकुद्दालाः). — d) K D3.4.7 सचैल; B4.5 Ds D2 सचेल-; T1 G1.4.5 समधु-; G2 समंद-; G3 M समल- (for सतैल-). K3 D1 S -क्षौद्र- (for -क्षौम-). B5 Ds -वाससः (for -सर्पिषः). — S reads 6cd after 7 (G3.4, after 544*). — After 7, N (Dn2 missing) G3.4 ins.:

544* रुक्मजालप्रतिच्छन्ना नानामणिविभूषिताः ।

K3.5 cont.:

545* व्याघ्रचर्मपरीधानाः सुवेषाः समलंकृताः ।
[Cf. 6c and v.l.]

सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः ॥ ७
चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः ।
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्रमाः ॥ ८
कुलीना हययोनिज्ञाः सारथ्ये विनिवेशिताः ।
बद्धारिष्टा बद्धकक्ष्या बद्धध्वजपताकिनः ॥ ९
चतुर्युजो रथाः सर्वे सर्वे शस्त्रसमायुताः ।
संहृष्टवाहनाः सर्वे सर्वे शतशरासनाः ॥ १०
धुर्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी ।
तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा ॥ ११
नगराणीव गुप्तानि दुरादेयानि शत्रुभिः ।
आसन्रथसहस्राणि हेममालीनि सर्वशः ॥ १२
यथा रथास्तथा नागा बद्धकक्ष्याः स्वलंकृताः ।
बभूवुः सप्त पुरुषा रत्नवन्त इवाद्रयः ॥ १३
द्वावङ्कुशधरौ तेषु द्वावुत्तमधनुर्धरौ ।
द्वौ वरासिधरौ राजन्नेकः शक्तिपताकधृक् ॥ १४
गजैर्मत्तैः समाकीर्णं सवर्मायुधकोशकैः ।
तद्बभूव बलं राजन्कौरव्यस्य सहस्रशः ॥ १५
विचित्रकवचामुक्तैः सपताकैः स्वलंकृतैः ।
सादिभिश्चोपसंपन्ना आसन्नयुतशो हयाः ॥ १६
सुसंग्राहाः सुसंतोषा हेमभाण्डपरिच्छदाः ।
अनेकशतसाहस्रास्ते च सादिवशे स्थिताः ॥ १७
नानारूपविकाराश्च नानाकवचशस्त्रिणः ।

C. 5. 5263
B. 5. 155. 21
K. 5. 155. 21

8 $^{a}$) $K_{1.2}$ सुवहवः; $K_{3.5}$ $D_1$ सुबहुशः; S वपुष्मंतः (for सुवपुषः). — After $8^{ab}$, $G_4$ $M_5$ read $10^{cd}$; $T_1$ $G_5$ read $8^{cd}$ (with $9^{ab}$) after 10. — $^{d}$) $K_{4.5}$ B (except $B_2$) $Dn_1$ $D_{3.4.8}$ $T_1$ $G_4$ °निश्रयाः; Ca °निश्रमाः (as in text).

9 $T_1$ $G_5$ read $9^{ab}$ (with $8^{cd}$) after 10. — $^{b}$) $K_{1.2}$ $D_{3.4.7}$ $G_3$ M [ऽ]भि-; Cs वि- (as in text). — Ds om. $9^{c}$–$10^{d}$; $G_4$ om. (hapl.) $9^{c}$–$10^{b}$. — $^{c}$) A few N MSS. °कक्षाः. $D_{3.4}$ बद्धासयो बद्धरिष्टाः. — After 9, N (except Ds; $Dn_2$ missing) ins.:

546* बद्धाभरणनिर्व्यूहा बद्धचर्मासिपट्टिशाः ।

[ $K_5$ B (except $B_2$) $D_6$ Ca.d.n.s °निर्यूहा (for °निर्व्यूहा). ]

10 Ds om. 10; $G_4$ om. $10^{ab}$ (cf. v.l. 9). — $^{a}$) $D_{3.4}$ चतुर्युगरथाः. — $B_5$ om. (hapl.) $10^{bc}$. — $^{b}$) $K_{1.2.5}$ $D_7$ सर्वे चैव श($K_5$ सि)तोत्तराः; $K_3$ $D_1$ सर्वे चैव सतोमराः; $K_4$ B ($B_5$ om.) $Dn_1$ $D_{6.8.10}$ सर्वे चोत्तमवाजिनः; $D_2$ सर्वे चैव सतां नराः; $D_{3.4}$ सर्वे च सहतोमराः; T G ($G_4$ om.) सर्वशस्त्रसमायुताः. — $G_4$ $M_5$ read $10^{cd}$ after $8^{ab}$. — $^{c}$) $K_{1-3.5}$ $D_{1-4.7}$ सपार्ष्णिवाहकाः सर्वे; $K_4$ $B_{1.4}$ $Dn_1$ $D_{6.8.10}$ सप्रासऋ($K_4$ °कृ)ष्टिकाः सर्वे; $B_2$ Ca सप्रासिवाहकाः सर्वे; $B_3$ सप्राणऋष्टिकाः सर्वे; $T_1$ $G_{1.3.4}$ संहृष्टवदनाः सर्वे. Cd cites वाहकाः. — $^{d}$) $T_2$ $G_{2.3.5}$ शर° (for शत°). — After 10, $T_1$ $G_5$ read $8^{c}$–$9^{b}$.

11 $^{b}$) S (except $T_2$) अन्यः (for अन्यौ). $T_1$ $G_1$ M प्राष्ठि-; $G_{3.4}$ प्रष्ठि-; $G_5$ प्रष्ठ- (for पार्ष्णि-). S (except $T_2$) -सारथिः. — $^{c}$) K (except $K_4$) $D_7$ धनुषि (for रथिनां). — $^{d}$) K (except $K_4$) $D_1$ रथे च. $K_{1.2}$ हयकोविदौ; $K_5$ $D_1$ हयवित्तमौ.

12 $^{a}$) $D_6$ T G च (for [इ]व). — $^{b}$) $K_{1.4}$ B $Dn_1$ Ds $D_{3.4.6.8.10}$ दुराधर्षाणि; $D_1$ °धेयानि; Ca.s as in text.

13 $^{b}$) N (mostly) बद्धकक्षाः. — $^{c}$) $D_{3.4}$ ते बभुः (for बभूवुः). — $^{d}$) $D_{3.4}$ अचलाः (for अद्रयः).

14 $^{a}$) $K_4$ B $Dn_1$ Ds $D_{3.4.6.8.10}$ तत्र (for तेषु). — $^{b}$) $D_{3.4}$ द्वौ तु तत्र; M (except $M_1$) द्वावुत्तर-; Ca द्वौ एव च (for द्वावुत्तम-). — $^{d}$) $K_4$ B $Dn_1$ Ds $D_{6.7.10}$ Ca °पिनाकधृक् ($B_{3.5}$ °धृत्; $D_2$ °भृत्). S एक($T_2$ $G_{1.2}$ °कः)च्छत्रपताकधृक् (T °धृत्).

15 $^{b}$) $K_1$ $Dn_1$ $T_2$ $G_2$ सचर्मायुध-. K (except $K_4$) $B_2$ $D_7$ -भूषणैः; a few other MSS. -कोषकैः (for -कोशकैः). — $^{d}$) $K_4$ $B_{2.4}$ $Dn_1$ Ds $D_{2-4.6.8.10}$ महात्मनः (for सह°).

16 $^{a}$) $K_4$ $B_{1-3.5}$ $Dn_1$ Ds $D_{1.3.4.6.8.10}$ $T_1$ आमुक्तकवचैः युक्तैः ($B_2$ शूरैः; Ds मुक्तैः); $B_4$ आमुक्तचित्रकवचैः; $D_{2.7}$ $G_3$ विचित्रकवचायुक्तैः. — $^{b}$) $D_{6.8}$ $G_4$ $M_{2.4}$ सुपताकैः. — $^{c}$) $K_4$ B $Dn_1$ Ds $D_{6.8.10}$ चोपपन्नास्तु ($B_{1-4}$ °श्च); $D_{3.4}$ चैव संपन्ना; $T_2$ $G_2$ चापि सं°. — $^{d}$) B (except $B_5$) $Dn_1$ Ds $D_{6.8.10}$ तथा चा° (for आसन्न°).

17 $^{a}$) $K_{3.5}$ $B_{1.3}$ $D_7$ S सुसंग्रहाः; $K_4$ $B_4$ $D_6$ Cn असंग्राहाः; $Dn_1$ ससंग्राहाः; $D_{1.2}$ असंग्रहाः; $D_{3.4}$ असंग्राह्याः. $K_4$ B $Dn_1$ Ds $D_{6.8.10}$ सुसंपन्नाः; $D_{3.4}$ सुसंपन्न-. — $^{d}$) $K_{1.2}$ तत्र; $K_4$ $B_{2.4.5}$ $Dn_1$ Ds $D_{6.8.10}$ सर्वे; $D_8$ बले (for ते च). $D_{3.4}$ तेजसादित्यसंनिभाः.

C. 5. 5263
B. 5. 155. 21
K. 5. 155. 21

पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥ १८
रथस्यासन्दश गजा गजस्य दश वाजिनः ।
नरा दश हयस्यासन्पादरक्षाः समन्ततः ॥ १९
रथस्य नागाः पञ्चाशन्नागस्यासञ्शतं हयाः ।
हयस्य पुरुषाः सप्त भिन्नसंधानकारिणः ॥ २०
सेना पञ्चशतं नागा रथास्तावन्त एव च ।
दश सेना च पृतना पृतना दश वाहिनी ॥ २१
वाहिनी पृतना सेना ध्वजिनी सादिनी चमूः ।
अक्षौहिणीति पर्यायैर्निरुक्ताथ वरूथिनी ।
एवं व्यूढान्यनीकानि कौरवेयेण धीमता ॥ २२
अक्षौहिण्यो दशैका च संख्याताः सप्त चैव ह ।
अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलम् ।
अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ॥ २३
नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते ।
सेनामुखं च तिस्रस्ता गुल्म इत्यभिसंज्ञितः ॥ २४
दश गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन् ।
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः ॥ २५
तत्र दुर्योधनो राजा शूरान्बुद्धिमतो नरान् ।
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा ॥ २६
पृथगक्षौहिणीनां च प्रणेतॄन्नरसत्तमान् ।
विधिपूर्वं समानीय पार्थिवानभ्यषेचयत् ॥ २७
कृपं द्रोणं च शल्यं च सैन्धवं च महारथम् ।
सुदक्षिणं च काम्बोजं कृतवर्माणमेव च ॥ २८
द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च ।
शकुनिं सौबलं चैव बाह्लीकं च महारथम् ॥ २९
दिवसे दिवसे तेषां प्रतिवेलं च भारत ।
चक्रे स विविधाः संज्ञाः प्रत्यक्षं च पुनः पुनः ॥ ३०
तथा विनियताः सर्वे ये च तेषां पदानुगाः ।
बभूवुः सैनिका राजन्राज्ञः प्रियचिकीर्षवः ॥ ३१

इति श्रीमहाभारते उद्योगपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥ समाप्तमभिनिर्याणपर्व ॥

---

18 $^{a}$) $D_{3.4}$ °विचित्राश्व. Ca. d cite विकाराः (as in text). — $^{b}$) $D_{7}$ °धारिणः. — $^{c}$) $K_{3}$ पदातयो.

19 $^{d}$) $K_{1-3}$ $D_{1}$ सहस्रशः (for समन्ततः).

20 $^{a}$) $K_{1.2}$ $D_{6.8}$ $T_{2}$ $G_{1.3.4}$ पंचासन् (for पञ्चाशत्). — $^{b}$) $T_{2}$ $G_{1.4.5}$ तथा (for शतं).

21 $^{a}$) $M_{2.5}$ पंचाशतं. — $^{b}$) $B_{2.5}$ हि (for च). — After $21^{ab}$, T G (except $G_{3}$) ins.:

547* पञ्चाशच्च शतं चाश्वा नराः पञ्चगुणास्ततः ।

22 $^{a}$) $K_{4}$ B $D_{n1}$ Ds $D_{6.8.10}$ सेना तु ($B_{3.5}$ $D_{n1}$ च) वाहिनी चैव. — $^{b}$) $D_{3.4}$ चैव सा (for सादिनी). $K_{4}$ B $D_{n1}$ Ds $D_{6.8.10}$ पृतना ध्वजिनी चमूः. — $^{c}$) A few MSS. अक्षोहिणी. $K_{5}$ $D_{1}$ $M_{5}$ हि; $B_{2}$ Ds तु; $D_{3.4}$ च (for [इ]ति). — $^{d}$) $K_{4.5}$ B $D_{n1}$ Ds $D_{3.4.6.8.10}$ च (for [अ]थ).

23 $^{a}$) A few MSS. अक्षोहिण्यः. — $K_{3}$ om. (hapl.) $23^{b}$–$23^{e}$; $D_{1}$ om. $23^{bcd}$. — $^{b}$) $K_{1}$ $B_{2}$ सप्त एव; $K_{2}$ तत्र चैव; $D_{3.4}$ सर्वे एव (for सप्त चैव). K ($K_{3}$ om.) $B_{2.5}$ $D_{2.8}$ $G_{4}$ हि; Ds च (for ह). For $23^{b}$, $G_{5}$ reads $23^{f}$ (for the first time), *repeating* it in its proper place. — $^{e}$) A few MSS. अक्षोहिण्यः. $K_{1.2}$ $D_{7}$ च (for तु). — $K_{1.2.5}$ $B_{4}$ $D_{2-4}$ $T_{2}$ $G_{2}$ om. (hapl.) $23^{ef}$.

24 $^{b}$) $T_{2}$ $G_{2.4}$ एषां (for एषा). — $^{c}$) $K_{4}$ $D_{6.8.10}$ तु (for च). — $^{d}$) $K_{3}$ $B_{2}$ $D_{1}$ °धीयते; $K_{4}$ $B_{5}$ °शब्दितः; $B_{4}$ $D_{n1}$ °शब्दितं; Ds $D_{2}$ °संज्ञितं; S (except $G_{5}$ $M_{1.2}$) °संज्ञिताः (for °संज्ञितः).

25 $^{a}$) $K_{4}$ B $D_{n1}$ Ds $D_{2-4.6.10}$ $T_{1}$ Ca त्रयो; Cd दश (as in text). $D_{1.8}$ गुल्मो; $G_{3-5}$ गुल्म- (for गुल्मा). T G (except $G_{3}$) गणास्त्वा($G_{5}$ °श्वा)सन् (for गणस्त्वासीत्). — $^{b}$) $K_{2}$ $B_{3}$ $D_{n1}$ Ds $D_{6.8.10}$ गणस् (for गणास्). Ds $D_{6.8.10}$ भवेत् (for ऽभवन्). — $^{c}$) $K_{3.5}$ $D_{6.8}$ सेनास्तु; $D_{3.4}$ °यां (for °सु).

26 $^{a}$) $D_{1}$ S (except $T_{2}$ $G_{1.2}$) ततो (for तत्र). $T_{1}$ $G_{4}$ राज्ञः (for राजा). — $^{b}$) Ds वरान् (for नरान्). — $^{c}$) $D_{10}$ $T_{2}$ $G_{1.2}$ महाबाहून्. — $^{d}$) $K_{3}$ ततः; $K_{5}$ Ds $D_{8}$ $G_{3}$ तथा (for तदा).

27 $^{b}$) $K_{1.3}$ $D_{2}$ रथ°; $K_{2}$ अथ; $G_{1.4}$ नृप° (for नर°). — $^{c}$) $K_{4}$ B $D_{n1}$ Ds $D_{1.6.8.10}$ विधिवत्पूर्वमानीय. — $^{d}$) $K_{4}$ B $D_{n1}$ Ds $D_{3.4.6.8.10}$ °भाषत (for °षेचयत्).

28 $^{b}$) $K_{4}$ $B_{2.4.5}$ $D_{n1}$ Ds $D_{6-8.10}$ जयद्रथं (for महा°). — $^{c}$) T $G_{2}$ कांभोजं.

29 $^{a}$) $K_{3}$ $T_{1}$ विकर्णं (for च कर्णं). — $^{d}$) Some MSS. बाह्लिकं. $K_{3.4}$ $B_{2.4.5}$ $D_{n1}$ Ds $D_{7.8.10}$ महाबलं.

30 $^{a}$) $K_{1.2}$ $B_{3}$ $D_{2-4.7}$ चैषां (for तेषां). — $^{b}$) $D_{2}$

# १५३

### वैशंपायन उवाच ।

ततः शांतनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः ।
सह सर्वैर्महीपालैरिदं वचनमब्रवीत् ॥ १
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा ॥ २
न हि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित् ।
शौर्यं च नाम नेतॄणां स्पर्धते च परस्परम् ॥ ३
श्रूयते च महाप्राज्ञ हैहयानमितौजसः ।
अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रितकुशध्वजाः ॥ ४
तानन्वयुस्तदा वैश्याः शूद्राश्चैव पितामह ।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥ ५
ते स्म युद्धेष्वभज्यन्त त्रयो वर्णाः पुनः पुनः ।
क्षत्रियास्तु जयन्त्येव बहुलं चैकतो बलम् ॥ ६
ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः ।
तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥ ७
वयमेकस्य शृणुमो महाबुद्धिमतो रणे ।
भवन्तस्तु पृथक्सर्वे स्वबुद्धिवशवर्तिनः ॥ ८
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम् ।
नयेषु कुशलं शूरमजयन्क्षत्रियांस्ततः ॥ ९
एवं ये कुशलं शूरं हिते स्थितमकल्मषम् ।

C. 5. 5287
B. 5. 156. 10
K. 5. 156. 10

---

बलं प्रति (for प्रतिवेलं). — $^{c}$) $D_{3.4}$ च; $G_{4}$ [ऽ]थ (for स). $K_{4}$ B $Dn_{1}$ Ds $D_{2-4.6.8.10}$ पूजाः; Ca. d संज्ञाः (as in text).

31 $^{a}$) $T_{1}$ G (except $G_{2}$) [अ]पि (for वि-). — $^{b}$) $M_{3-5}$ वशा° (for पदा°). — After $31^{ab}$, $B_{2}$ $D_{2.8}$ ins.:

548* हृष्टाः पुष्टाः सुसंनद्धा विक्रमे दृढनिश्चयाः ।

— $^{c}$) $K_{1-3}$ $D_{1.7}$ सव; $K_{4}$ $B_{1.4}$ राज्ञां; $B_{2}$ $Dn_{1}$ Ds $D_{6.8.10}$ राज्ञः (for राजन्). — $^{d}$) $K_{4}$ Ds $D_{6.8.10}$ प्रियं राजंश्रि°; $B_{1.4}$ $Dn_{1}$ प्रियं राज्ञश्रि°.

Colophon. $Dn_{2}$ $D_{5.9}$ missing. — *Sub-parvan:* $K_{1.2.5}$ $D_{2.7}$ $T_{1}$ $G_{1.4.5}$ अभिनिर्याणयात्रा; $B_{3}$ अभियात्रा; $K_{4}$ $B_{1.2.4.5}$ $Dn_{1}$ Ds $D_{6.8.10}$ $M_{1-4}$ अभि($M_{2-4}$ om. अभि)निर्यात्रा. — *Adhy. name:* $T_{1}$ $G_{1.5}$ M धार्तराष्ट्रसेनाविभागकरणं ($T_{1}$ $G_{1}$ °कथनं); $G_{4}$ धार्तराष्ट्रसेनाविभागं. — *Adhy. no.* (figures, words or both): $D_{6}$ 45 (=145); $D_{7}$ $T_{2}$ M 155 ($M_{4}$ 154); $T_{1}$ $G_{2.4.5}$ 156; $G_{1}$ 157; $G_{3}$ 153. — *S'loka no.:* $K_{5}$ 40; $Dn_{1}$ 35.

## 153

☞ This adhy. is missing in $Dn_{2}$ (cf. v.l. 5. 143. 2). $Dn_{1}$ om. this adhy. The MSS. are mostly ignored here.

2 $^{d}$) $T_{1}$ $G_{4.5}$ °गणो; Ca. d °पुटं (as in text).

3 $^{c}$) $K_{2}$ बलमनेतॄणां; $B_{4}$ $D_{1.6.8.10}$ च बलने°; $D_{3.4}$ च वर्धते नृणां; S च जायते नृणां (for च नाम नेतॄणां). — $^{d}$) $D_{2}$ $T_{2}$ $G_{2.3.5}$ $M_{3-5}$ स्पर्धंते.

4 $^{a}$) $K_{5}$ $D_{2.7}$ $T_{2}$ $G_{2}$ M (except $M_{2}$) हि (for च). — $^{b}$) S (except $T_{2}$ $G_{2}$) हेहयान्; $D_{2}$ both हैहयान् and क्षत्रियान्. — $^{d}$) $K_{3}$ $D_{2}$ (*sup.lin.*) समुद्धृत°; $K_{5}$ समुत्थित°; $D_{3.4}$ °कुशायुधाः.

5 $K_{4}$ om. 5. — $^{a}$) $B_{2.4.5}$ $D_{1-4}$ अभ्ययुस् (for अन्वयुस्). S (except $T_{2}$ $G_{1.2}$) तथा (for तदा).

6 $^{a}$) $K_{3}$ $B_{3}$ तेषु; $K_{4}$ $B_{4}$ Ds $D_{1.6.8.10}$ ततो; $D_{3.4}$ ते तु; $D_{7}$ तेपि (for ते स्म). $B_{1-3}$ $D_{2}$ युद्धेषु भज्यंते ($B_{2}$ $D_{2}$ °त); $D_{7}$ युद्धे व्यभज्यंत; T $G_{1.2.5}$ M युद्धे प्रभज्यंते ($G_{5}$ $M_{1.2.4}$ °त); $G_{3}$ युद्धे प्रवर्तंते; $G_{4}$ युद्धे प्रसज्यंते. — After $6^{ab}$, $G_{4}$ ins.:

549* तथापि नियताः सर्वे क्षत्रियास्तु जघन्यजाः ।

— $^{c}$) $K_{4}$ B Ds $D_{1.2.6.8.10}$ च (for तु). — $^{d}$) $D_{2}$ चैव तद् (for चैकतो).

7 $^{a}$) $B_{2}$ तान्; $T_{2}$ तु (for ते). — $^{c}$) $K_{1.3}$ $G_{2.4}$ धर्मज्ञ. — $^{d}$) $K_{1.4}$ $D_{10}$ T G (except $G_{1}$) $M_{5}$ यथातथ्यं ($G_{2}$ °त्वं).

8 $^{a}$) $K_{4}$ B Ds $D_{6.10}$ शृण्वानाः (for शृणुमः). — $^{b}$) $T_{1}$ यदा; $G_{1.4}$ यथा (for महा-). $D_{3.4}$ वचः (for रणे). — $^{c}$) $B_{1.2.4}$ पृथग्भूताः (for पृथक्सर्वे).

9 $^{b}$) $G_{5}$ रणे (for द्विजम्). — $D_{6}$ om. $9^{c}$–$11^{d}$. — $^{c}$) $B_{1.4.5}$ $D_{2-4}$ नये सुकुशलं शूरं. — $K_{3}$ om. (hapl.) $9^{d}$–$10^{a}$. — $^{d}$) $K_{4}$ $D_{2-4}$ $G_{1}$ तदा (for ततः).

10 $K_{3}$ om. $10^{a}$; $D_{6}$ om. 10 (cf. v.l. 9). — $^{b}$) B Ds $D_{2-4.10}$ हितेप्सितम्; $D_{7}$ हिते रतम् (for हिते स्थितम्). — $^{d}$) $K_{1-3}$ तरंति (for जयन्ति).

11 $D_{6}$ om. 11 (cf. v.l. 9). — $^{a}$) $K_{1-3}$ $D_{1.2}$

C. 5. 5287
B. 5. 156. 10
K. 5. 156. 10

सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ १०
भवानुशनसा तुल्यो हितैषी च सदा मम ।
असंहार्यः स्थितो धर्मे स नः सेनापतिर्भव ॥ ११
रश्मीवतामिवादित्यो वीरुधामिव चन्द्रमाः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥ १२
पर्वतानां यथा मेरुः सुपर्णः पततामिव ।
कुमार इव भूतानां वसूनामिव हव्यवाट् ॥ १३
भवता हि वयं गुप्ताः शक्रेणेव दिवौकसः ।
अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम् ॥ १४
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ॥ १५

भीष्म उवाच ।

एवमेतन्महाबाहो यथा वदसि भारत ।
यथैव हि भवन्तो मे तथैव मम पाण्डवाः ॥ १६
अपि चैव मया श्रेयो वाच्यं तेषां नराधिप ।
योद्धव्यं तु तवार्थाय यथा स समयः कृतः ॥ १७
न तु पश्यामि योद्धारमात्मनः सदृशं भुवि ।
ऋते तस्मान्नरव्याघ्रात्कुन्तीपुत्राद्धनंजयात् ॥ १८
स हि वेद महाबाहुर्दिव्यान्यस्त्राणि सर्वशः ।
न तु मां विवृतो युद्धे जातु युध्येत पाण्डवः ॥ १९
अहं स च क्षणेनैव निर्मनुष्यमिदं जगत् ।
कुर्यां शस्त्रबलेनैव ससुरासुरराक्षसम् ॥ २०
न त्वेवोत्सादनीया मे पाण्डोः पुत्रा नराधिप ।
तस्माद्योधान्हनिष्यामि प्रयोगेणायुतं सदा ॥ २१
एवमेषां करिष्यामि निधनं कुरुनन्दन ।
न चेत्ते मां हनिष्यन्ति पूर्वमेव समागमे ॥ २२
सेनापतिस्त्वहं राजन्समयेनापरेण ते ।
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥ २३
कर्णो वा युध्यतां पूर्वमहं वा पृथिवीपते ।
स्पर्धते हि सदात्यर्थं सूतपुत्रो मया रणे ॥ २४

---

उशनसस् (for उशनसा). — $^{d}$) $D_2$ मम (for स नः). $M_{3-5}$ भवेत् (for भव).

12 $^{a}$) $K_{1-3}$ $D_7$ प्रभावताम्; B Ds $D_{1-4.6.10}$ $T_2$ $G_2$ रश्मिव($B_3$ Ds °म)ताम्. — $G_5$ om. (hapl.) $12^{d}$–$13^{c}$. — $^{d}$) $K_{4.5}$ B Ds $D_{6.8.10}$ देवानामिव.

13 $G_5$ om. $13^{abc}$ (cf. v.l. 12). — $^{b}$) $K_4$ B Ds $D_{6.8.10}$ °र्णः पक्षिणां यथा. — $^{c}$) $K_4$ B Ds $D_{1.6-8.10}$ देवानां (for भूतानां).

14 $^{d}$) S त्रिदशैरपि यद् ($M_1$ *inf. lin.* च) ध्रुवं.

15 $^{a}$) $G_4$ भगवान् (for नो भवान्). — $^{b}$) $K_5$ $G_4$ $M_2$ पावकः; Ca. d पावकिः (as in text). — $^{d}$) $G_2$ सारमेया (for सौरभेया). — After 15, $K_3$ (marg. *sec. m.*) ins.:

550* इत्युक्त्वा पादयोस्तस्य निपपात नराधिपः ।
　　रक्षास्मात्राजशार्दूल त्वामहं शरणं गतः ।

16 $^{a}$) $D_2$ एतत्सत्यं (for एवमेतन्). $T_2$ $G_{2.5}$ महाराज. — $^{c}$) $K_2$ $D_{3.4}$ तथैव (for य°). $K_{1-3}$ $D_{1.2}$ तु (for हि). $K_3$ भवान्महं (for भवन्तो मे).

17 $^{a}$) $K_{3.5}$ युध्यतापि; $D_1$ त्वयि चैव (for अपि चैव). $T_2$ $G_2$ वचः; $G_5$ तव (for मया). — $^{b}$) $K_{3.5}$ $D_{1-4.7}$ S (except $G_{1.4}$) जना° (for नरा°). — $^{c}$) $K_{1.2.5}$ च (for तु). $K_4$ B (except $B_3$) Ds $D_{6.10}$ संयोद्धव्यं (for योद्धव्यं तु). — $^{d}$) $K_4$ B Ds $D_{3.4.6.8.10}$ मे; $K_5$ च (for स).

18 $^{a}$) $K_4$ $D_{6.8}$ तं (for तु). — $^{c}$) $D_2$ महाबाहो (for नरव्याघ्रात्).

19 $^{a}$) $K_{4.5}$ B (except $B_2$) Ds $D_{3.4.6.8.10}$ °बुद्धिः (for °बाहुः). — $^{b}$) $K_{3.4}$ $B_{1.3.5}$ Ds $D_{3.4.6.8.10}$ [अ]नेकशः; $B_4$ [अ]शेषतः (for सर्वशः). — $^{c}$) $K_{1-3.5}$ मे; T $G_{2.3.5}$ M मा (for मां). $D_2$ विध्रतः; $D_{3.4}$ $M_4$ विवृते; $G_1$ अवृते; Ca. d. s विवृतः (as in text).

20 $^{a}$) $K_4$ $D_{6.8}$ चैक-; $B_{1-3}$ $D_{3.4}$ चापि; $B_{4.5}$ Ds $D_1$ चैव; $D_{7.10}$ चैकः (for स च). — $^{c}$) $K_{1.2}$ $D_7$ कुर्यां चास्त्र°; $K_3$ S (for $G_2$ see below) कुर्यांवोस्त्र°; $K_5$ कुर्यावः स्व°; $D_{2.4}$ $G_2$ कुर्यामस्त्र°. — $^{d}$) $K_{1.2}$ $B_2$ $D_{2.7}$ सदेवासुर°; $K_{3.5}$ $G_1$ ससुरा($K_3$ °देवा)सुरमानुषं.

21 $B_2$ om. 21. — $^{a}$) $D_{3.4}$ न त्वैवों°. — $^{b}$) $K_4$ $B_{1.3.4}$ Ds $D_{6.8.10}$ जना° (for नरा°). — $^{d}$) $K_{1.3.5}$ $D_{3.4.8}$ Ca. d. s प्रयोगेण (as in text); the rest °न. $K_5$ $D_{6.10}$ $T_2$ $G_{1-3.5}$ M तदा ($G_1$ सदा also, as in text); Ds $T_1$ $G_4$ तथा.

22 $^{b}$) $D_1$ कुरुपुंगव; S °सत्तम.

23 $^{a}$) $K_4$ Ds $D_{6.10}$ भविष्यामि (for त्वहं राजन्). — $^{b}$) $K_1$ च; $T_2$ $G_2$ तु (for ते). $D_7$ समयेनैवमच्युत. — $K_4$ $D_6$ om. $23^{cd}$. — $^{c}$) $K_{1-3}$ $B_4$ $D_7$ °कालं (for °कामं).

24 $^{c}$) $B_2$ $G_5$ $M_2$ मया°; $D_1$ स चा° (for सदा°). — $^{d}$) $B_2$ $M_2$ महा- (for मया).

कर्ण उवाच ।

नाहं जीवति गाङ्गेये योत्स्ये राजन्कथंचन ।
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥ २५

वैशंपायन उवाच ।

ततः सेनापतिं चक्रे विधिवद्भूरिदक्षिणम् ।
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत ॥ २६
ततो भेरीश्च शङ्खांश्च शतशश्चैव पुष्करान् ।
वादयामासुरव्यग्राः पुरुषा राजशासनात् ॥ २७
सिंहनादाश्च विविधा वाहनानां च निस्वनाः ।
प्रादुरासन्ननभ्रे च वर्षं रुधिरकर्दमम् ॥ २८
निर्घाताः पृथिवीकम्पा गजबृंहितनिस्वनाः ।
आसंश्च सर्वयोधानां पातयन्तो मनांस्युत ॥ २९
वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे ।
शिवाश्च भयवेदिन्यो नेदुर्दीप्तस्वरा भृशम् ॥ ३०
सेनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान् ।
तदैतान्युग्ररूपाणि अभवञ्शतशो नृप ॥ ३१
ततः सेनापतिं कृत्वा भीष्मं परबलार्दनम् ।
वाचयित्वा द्विजश्रेष्ठान्निष्कैर्गोभिश्च भूरिशः ॥ ३२
वर्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः ।
आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा ।
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह ॥ ३३
परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः ।
शिबिरं मापयामास समे देशे नराधिपः ॥ ३४
मधुरानूषरे देशे प्रभूतयवसेन्धने ।
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ ॥ ३५

C. 5. 5313
B. 5. 156. 36
K. 5. 156. 36

इति श्रीमहाभारते उद्योगपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

---

25 =(var.) 5. 165. 27. — $^{b}$) K3.4 B Ds D6.8.10 transp. योत्स्ये and राजन्. — $^{c}$) K5 B1.2 D2–4 S (except G3) transp. भीष्मे and तु. K1–3 B2 D2.7 योद्धास्मि (for योत्स्यामि). — $^{d}$) K2.5 D7 सह गांजीवधन्व- (K2 °न्वि)ना.

26 $^{b}$) K4 B5 Ds D2.6.8.10 °दक्षिणः.

27 $^{a}$) K3.5 Ds D6–8.10 G3.4 M2.3.5 शंखाश्च. — $^{b}$) K4 B (except B2) Ds D6.8.10 शतशोथ सहस्रशः. Ca.d cite पुष्करं, Cs पुष्कराणि. — $^{c}$) K1 नादया°; K2 नोदया°; D8 ताडया°. — $^{d}$) K4 B (except B3) Ds D6.8.10 वादका (for पुरुषा).

28 $^{b}$) A few MSS. निःस्वनाः. — S reads $28^{cd}$ after $30^{ab}$. — $^{c}$) K3.5 D3.4.7 आसीद् (for आसन्). K3 D3.4 G1.4 अनभ्रेषु; D7 ततस्तत्र (for अनभ्रे च). — $^{d}$) B4 °मेव च (for °कर्दमम्).

29 $^{b}$) Some MSS. °निःस्वनाः. — $^{d}$) K (except K4) B2 Ds D1.7.8 तापयंतो; S (except T1) पीड°. K3 [अ]थ; D1 G2 च (for [उ]त).

30 $^{b}$) T2 G (except G5) दिश°. K1.5 D1.7 प्रपेतिरे. — After $30^{ab}$, S reads $28^{cd}$. — $^{c}$) K1.2 [अ]भाव° (for भय°). — $^{d}$) K4 B2.4.5 Ds D2.6.8.10 °तराः; B1.3 °सुखाः; D3.4 °स्वनाः; Ca.d °स्वराः (as in text).

31 $^{a}$) K5 B Ds1 D3.4.6 सैना° (for सेना°). Ds राजन् (for राजा). G5 reads $31^{cd}$ after $32^{ab}$. — $^{c}$) K (except K4) B2 D1.2.7 तदैवाद्भुतरूपाणि; D3.4 तदैतान्यनुपूर्वाणि; T1 G4 तथैवात्युग्ररूपाणि; T2 G2 तदैवात्युग्र°; G1 तदेवान्युक्त°; G5 वाचकान्युग्र°. — $^{d}$) To avoid hiatus! K1–3 B2 D2 T2 G1–3 M ह्यभवन्; K4 B1.3–5 Ds D1.3.4.6–8.10 बभूवुः; K5 प्रभवन् (for अभवन्).

32 D3.4 om. 32. — $^{b}$) G5 °बलांतकं. — After $32^{ab}$, G5 reads $31^{cd}$. — $^{d}$) K4 B (except B2) Ds D6.8.10 transp. निष्कैः and गोभिः. K (except K4) D7 धनेन च; D1 च सर्वशः (for च भूरिशः).

33 $^{a}$) K1.2 वंद्य°; K3.5 D3.4.8 नंद्य°; S (except G3) पूज्य° (for वर्ध°). — $^{b}$) S निर्भयः (T G2 °यं; G1.3 °यैः) (for निर्ययौ). — $33^{c}$ = 5. 149. $56^{c}$.

34 $^{c}$) = 5. 149. $72^{a}$. K5 D1.10 T2 G2 स्थाप° (T2 also प्राप°); G3 याप° (for माप°). — $^{d}$) B2.4 D2–4 समदेशे. K1.2 B2.5 नराधिप; K4 B3.4 Ds D2–4.6.8.10 जनाधिपः (K4 B4 D2.6.10 °प).

35 $^{ab}$) = 5. 149. $69^{a}$ + $67^{b}$. — $^{c}$) Some S MSS. हस्तिनपुरं. — $^{d}$) B3 तथा (for तद्वच्). K (except K4) D1.2.7 तद्वत्तत् (K तथैव) शिबिरं बभौ; S शिबिरं तत्तथाभवत्.

Colophon om. in Dn1. Dn2 D5.9 missing — *Sub-parvan:* K1.2.5 B3 D2.7 G5 अभिनिर्याण( B3 om.

## १५४

C. 5. 5314
B. 5. 157. 1
K. 5. 157. 1

जनमेजय उवाच ।

आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरम् ।
पितामहं भारतानां ध्वजं सर्वमहीक्षिताम् ॥ १
बृहस्पतिसमं बुद्ध्या क्षमया पृथिवीसमम् ।
समुद्रमिव गाम्भीर्ये हिमवन्तमिव स्थिरम् ॥ २
प्रजापतिमिवौदार्ये तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ॥ ३
रणयज्ञे प्रतिभये स्वाभीले लोमहर्षणे ।
दीक्षितं चिररात्राय श्रुत्वा राजा युधिष्ठिरः ॥ ४
किमब्रवीन्महाबाहुः सर्वधर्मविशारदः ।
भीमसेनार्जुनौ वापि कृष्णो वा प्रत्यपद्यत ॥ ५

वैशंपायन उवाच ।

आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः ।
सर्वान्भ्रातॄन्समानीय वासुदेवं च सात्वतम् ।
उवाच वदतां श्रेष्ठः सान्त्वपूर्वमिदं वचः ॥ ६
पर्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः ।
पितामहेन वो युद्धं पूर्वमेव भविष्यति ।
तस्मात्सप्तसु सेनासु प्रणेतॄन्मम पश्यत ॥ ७

---

निर्याण)यात्रा; $K_4$ $B_{1.4.5}$ Ds $D_{2-4.6.8.10}$ M अभि($M_{2-5}$ om. अभि)निर्यात्राः — *Adhy. name*: $T_1$ M भीष्मसेनापत्य-($T_1$ $M_1$ °त्या)भिषेचनं; $G_4$ भीष्मसेनापत्याभिषेकः; $G_5$ भीष्मसैनापत्यं. — *Adhy. no.* (figures, words or both): $D_6$ 45 (=145); $T_1$ $G_{2.5}$ 157; $T_2$ M 156 ($M_4$ 155); $G_1$ 158; $G_3$ 154; $G_3$ 150. — *S'loka no.*: $K_5$ 36.

☞ The name भीष्माभिषेचन is given tentatively to this sub-parvan (adhy. 153–56) on the authority of the Parvasaṃgraha summary of the Ādiparvan, although its place is not definitely indicated there, nor in our MSS. The name does not occur in any of our MSS., which regard these adhy. as a continuation of अभिनिर्याण, as do also the printed editions except that of P. P. S. Sastri; but some S MSS. give the adhy. name of 153 as भीष्मसेनापत्याभिषेचन or °भिषेक, justified by its contents. The *end* of this sub-parvan is indicated by the definite commencement of the next sub-parvan उलूकयान at adhy. 157.

### 154

☞ This adhy. is missing in $Dn_2$ (cf. v.l. 5. 143. 2); the MS. is mostly ignored here. $Dn_1$ resumes from this adhy.!

1 $^{b}$) $K_{2.8}$ °विदां (for °भृतां). — $^{d}$) $K_{1.2}$ वृद्धं; $Dn_1$ भुजं (for ध्वजं). Ds पूर्वं (for सर्व-).

2 $G_2$ om. (hapl.) $2^{c}$–$3^{b}$. — $^{d}$) $K_{1.2}$ $T_1$ स्थितौ; $B_3$ $D_1$ $G_3$(before corr.)$_{.4.5}$ M (except $M_1$) स्थितं; $D_{3.4}$ [अ]तुलं (for स्थिरम्).

3 $G_2$ om. $3^{ab}$ (cf. v.l. 2). — $^{d}$) $K_5$ $T_1$ ध्वंसने; $D_2$ ध्वंसाय; Ca as in text.

4 $^{a}$) $K_4$ B (except $B_2$) $Dn_1$ $Ds_1$ $D_{3.4.6.8.10}$ प्रवितते; Ca.d.s प्रतिभये (as in text). — $^{b}$) $K_4$ $B_{1.3-5}$ $D_{2-4.6.8.10}$ सुभीमे; $K_5$ आभिले; $B_2$ [ऽ]भ्यास्तीर्णे; $Dn_1$ संग्रामे; $Ds_1$ त्वाभीले; $Ds_2$ [ऽ]द्याभीले; $G_1$ सुभीते; $G_3$ स्वाभीते; Ca ह्याडीले; Cd.s आभीले. S (except $T_1$ $G_5$) रोम°. — $^{d}$) $K_4$ Ds $D_{6.10}$ दृष्ट्वा राजा; $D_8$ तत्र श्रुत्वा (for श्रुत्वा राजा). $K_4$ B $Dn_1$ Ds $D_{6.10}$ तत्र; $D_{3.4}$ तं चं (for राजा).

5 $T_2$ $G_2$ om. 5. — $^{b}$) $K_1$ सर्वशस्त्रविशारदः; $K_{3.4}$ $B_{1.3.4}$ $Dn_1$ Ds $D_{2.6.8.10}$ °शस्त्रभृतां वरः; $B_5$ $D_{3.4}$ °धर्मभृतां वरः. — $^{c}$) Ds तदा भीमा° (for भीमसेना°). $K_2$ $Dn_1$ $Ds_2$ $D_{1.3.4.7.8}$ चापि; $G_{1.3.5}$ M वा किं (for वापि). — $^{d}$) $K_4$ $B_4$ $Dn_1$ Ds $D_{3.4.6.8.10}$ प्रत्यभाषत; $D_1$ किमभाषत; $D_7$ देवकीसुतः; $G_{1.5}$ प्रत्यपद्यतां; $M_{3-5}$ प्रतिपद्यत.

6 $^{c}$) $K_1$ समानाय्य; $K_2$ °भाष्य; $D_1$ $T_2$ $M_4$ °दाय; $G_2$ °धाय (for समानीय). — $^{d}$) $K_{2.4}$ B (except $B_2$) $Dn_1$ $D_{6.10}$ $M_4$ च शाश्वतं; $K_5$ ससात्यकिं (for च सात्वतम्). — $^{e}$) $K_8$ अवदद् (for उवाच).

7 $^{a}$) $K_5$ $D_7$ $G_8$ पर्याक्रमत; $B_2$ पर्याकुरुत; $T_2$ $G_5$ $M_{3.4}$(*inf. lin.*)$_{.5}$ परिक्रामत. — $^{b}$) $G_2$ युक्तास्. $B_3$ तिष्ठंतु. S (mostly) दंसिताः. — $^{e}$) $K_1$ M (except $M_1$) वा (for वो). $D_1$ योद्धव्यं (for वो युद्धं). — $^{f}$) $D_{1.7.8}$ समः; $G_3$ युधि (for मम). $D_{3.4}$ प्रणेतारं च पश्यत.

वासुदेव उवाच ।

यथार्हति भवान्वक्तुमस्मिन्काल उपस्थिते ।
तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ॥ ८
रोचते मे महाबाहो क्रियतां यदनन्तरम् ।
नायकास्तव सेनायामभिषिच्यन्तु सप्त वै ॥ ९

वैशंपायन उवाच ।

ततो द्रुपदमानाय्य विराटं शिनिपुंगवम् ।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिवम् ।
शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् ॥ १०
एतान्सप्त महेष्वासान्वीरान्युद्धाभिनन्दिनः ।
सेनाप्रणेतॄन्विधिवदभ्यषिञ्चद्युधिष्ठिरः ॥ ११
सर्वसेनापतिं चात्र धृष्टद्युम्नमुपादिशत् ।
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः ॥ १२
सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ।
सेनापतिपतिं चक्रे गुडाकेशं धनंजयम् ॥ १३
अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ।
संकर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः ॥ १४
तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ।
प्राविशद्भवनं राज्ञः पाण्डवस्य हलायुधः ॥ १५
सहाक्रूरप्रभृतिभिर्गदसाम्बोल्मुकादिभिः ।
रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः ॥ १६
वृष्णिमुख्यैरभिगतैर्व्याघ्रैरिव बलोत्कटैः ।
अभिगुप्तो महाबाहुर्मरुद्भिरिव वासवः ॥ १७
नीलकौशेयवसनः कैलासशिखरोपमः ।
सिंहखेलगतिः श्रीमान्मदरक्तान्तलोचनः ॥ १८
तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः ।
उदतिष्ठत्तदा पार्थो भीमकर्मा वृकोदरः ॥ १९
गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन । C. 5. 5334 B. 5. 157. 21 K. 5. 157. 21

---

8 $K_4$ $B_{1.4.5}$ $Dn_1$ Ds $D_{6.8.10}$ कृष्णः; $B_3$ विष्णुः; T G श्रीभगवान् (for वासुदेवः). — $^{a}$) $T_1$ $G_4$ यदार्हति. — $^{b}$) To avoid hiatus! $K_{3.4}$ $Dn_1$ Ds $D_{6.8.10}$ ह्युप° (for उप°). — $^{c}$) $K_3$ तथैवम्; $B_5$ $D_{3.4}$ $T_1$ तदेवम् (for तथेदम्).

9 $^{a}$) $D_{3.4}$ $T_2$ $G_{1.2}$ ते (for मे). — $Ds_2$ om. (hapl.) $9^{bc}$. — $^{c}$) $T_2$ $G_{1.2.4}$ नायकान्. $K_5$ M (except $M_1$) सेनायाः; $T_1$ $G_4$ °सु (for °याम्). — $^{d}$) $K_4$ B $Dn_1$ Ds $D_{6.7.10}$ क्रियतामिह; $D_1$ $G_3$ अभिषिंचंतु; $D_8$ $T_1$ $G_1$ °षिंचतु; $T_2$ $G_2$ °षिंचत; $G_4$ °षेक्तुं तु (for अभिषिच्यन्तु).

10 $K_5$ om. (hapl.) $10^{de}$. — $^{d}$) $K_4$ $B_5$ पार्थिव. — $^{e}$) $B_2$ युधां श्रेष्ठं; $G_1$ च युद्धज्ञं (for च पाञ्चाल्यं).

11 $^{a}$) $K_4$ B (except $B_2$) $Dn_1$ Ds $D_{2-4.6-8.10}$ महाभागान् (for महेष्वासान्). — $^{b}$) $K_{4.5}$ M धीरान् (for वीरान्). $K_4$ B (except $B_2$) $Dn_1$ Ds $D_{3.4.6-8.10}$ °कांक्षिणः.

12 $^{b}$) $K_4$ B (except $B_2$) $Dn_1$ Ds $D_{3.4.6.7.10}$ चकार ह; T G अथादिशत् (for उपादिशत्). — $D_1$ om. $12^{c}$–$13^{b}$. — $^{c}$) K (except $K_4$) °हेतुर्. $T_2$ $G_{1-3}$ उत्पन्नं. — $G_4$ om. $12^{d}$–$14^{a}$. — $^{d}$) $B_2$ महत्वात्; $D_{10}$ य इष्टात्; $T_2$ $G_{1-3}$ समिद्धात् (for य इद्धात्). Ca cites इद्धात्.

13 $D_1$ om. $13^{ab}$; $G_4$ om. 13 (cf. v.l. 12); $B_3$ om. $13^{bc}$. — $^{b}$) $D_{3.4.8.10}$ समेतानां; $B_2$ शूराणां सु-; $D_7$ प्रणेतॄणां; $T_1$ समृद्धानां; $T_2$ $G_2$ सप्तानां सु- (for समस्तानां). — $^{c}$) $G_3$ सेनापतिं परं चक्रे.

14 $G_4$ om. $14^{a}$ (cf. v.l. 12). — $^{a}$) $K_5$ अस्य; $D_7$ एव (for अपि). $D_{3.4}$ नेतारं (for नेता च). — $^{b}$) $D_{3.4}$ यंतारं (for संयन्ता). $K_5$ यंता चैवापि वाजिनां.

15 $^{a}$) $K_4$ $Dn_1$ $D_{7.8}$ $G_3$ $M_{3-5}$ तं (for तद्). $G_4$ अव° (for उप°). — $^{c}$) $K_{1.2}$ आविशद्. $K_5$ प्राज्ञः; B $Dn_1$ $D_1$ राजन् (for राज्ञः). — $K_4$ om. $15^{d}$–$17^{a}$. — $^{d}$) B $D_{1.7}$ पांडवानां; $G_2$ धर्मज्ञस्य (for पाण्डवस्य).

16 $K_4$ om. 16 (cf. v.l. 15). — $^{b}$) $K_{3.5}$ शांब- (for साम्ब-). $B_{1.4.5}$ $Dn_1$ Ds $D_{6.10}$ $T_2$ $G_{1.2}$ -उद्धवं- (for -उल्मुक-). — $^{c}$) $D_{10}$ (m as in text) रौहिणेय- (for रौक्मिणेय-). T $G_{1.2.5}$ -युतैः (for -सुतैः). $K_{1.2}$ रौक्मिणेयाद्धृ($K_2$ °ह्वृ)तिशुकैः.

17 $K_4$ om. $17^{a}$ (cf. v.l. 15). — $^{a}$) $K_5$ °वीरैर् (for °मुख्यैर्). $K_5$ $B_{3-5}$ $Dn_1$ $D_{1.3.4.7}$ $M_{1.2.4}$ अधिगतैर्; Ds $D_{6.8.10}$ उपगतैर्; $D_2$ अधिगतो; $M_{3.5}$ अभिगतो. — $^{b}$) $K_3$ $D_{1.7}$ S मदो° (for बलो°).

18 $^{a}$) $B_{2.3}$ °कौषेय°. — $^{b}$) Some N MSS. कैलाश°.

19 $^{c}$) $D_{3.4.7.8}$ $G_3$ उदतिष्ठन् (for उदतिष्ठत्). $K_{3.4}$ B (except $B_2$) $Dn_1$ Ds $D_{1.6.8.10}$ ततः पार्थो; $K_5$ $G_4$ $M_{3.5}$ तथा पार्थो; $D_7$ महाबाहो.

20 $^{a}$) A few MSS. गांजीवधन्वा. — $^{b}$) $D_1$ भारत (for केचन). — $^{cd}$) $T_1$ $G_1$ ततः (for ते सं). $K_{3.4}$ B $Dn_1$ Ds $D_{1.6.8.10}$ $G_4$ °चक्रिरे ते वै ($B_3$ $Ds_2$ तं वै; $D_8$ सर्वे; $G_4$ [ऽ]भ्येत्य) समायांतं ($Dn_1$ Ds $D_{10}$ समायातं; $G_4$ ततः सर्वे) हलायुधं.

C. 5. 5335
B. 5. 157. 22
K. 5. 157. 21

पूजयांचक्रुरभ्येत्य ते स्म सर्वे हलायुधम् ॥ २०
ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना ।
वासुदेवपुरोगास्तु सर्व एवाभ्यवादयन् ॥ २१
विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः ।
युधिष्ठिरेण सहित उपाविशदरिंदमः ॥ २२
ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ।
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत ॥ २३
भवितायं महारौद्रो दारुणः पुरुषक्षयः ।
दिष्टमेतद्ध्रुवं मन्ये न शक्यमतिवर्तितुम् ॥ २४
अस्माद्युद्धात्समुत्तीर्णानपि वः ससुहृज्जनान् ।
अरोगानक्षतैर्देहैः पश्येयमिति मे मतिः ॥ २५
समेतं पार्थिवं क्षत्रं कालपक्कमसंशयम् ।
विमर्दः सुमहान्भावी मांसशोणितकर्दमः ॥ २६
उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।
संबन्धिषु समां वृत्तिं वर्तस्व मधुसूदन ॥ २७
पाण्डवा हि यथास्माकं तथा दुर्योधनो नृपः ।
तस्यापि क्रियतां युक्त्या सपर्येति पुनः पुनः ॥ २८
तच्च मे नाकरोद्वाक्यं त्वदर्थे मधुसूदनः ।
निविष्टः सर्वभावेन धनंजयमवेक्ष्य च ॥ २९
ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः ।
तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत ॥ ३०
न चाहमुत्सहे कृष्णमृते लोकमुदीक्षितुम् ।
ततोऽहमनुवर्तामि केशवस्य चिकीर्षितम् ॥ ३१
उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ ।
तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्योधने नृपे ॥ ३२
तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम् ।
न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम् ॥ ३३
एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः ।
तीर्थयात्रां ययौ रामो निवर्त्य मधुसूदनम् ॥ ३४

इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

---

21 $^{a}$) T1 G4.5 रामं; G1 राजन् (for राजा). — $^{c}$) K4 B1.2.4.5 Dn1 Ds D1.6.8.10 M4 तं; K5 B3 M3.5 ते (for तु). — $^{d}$) T2 G2 M °पूज° (for °वाद°).

22 $^{d}$) K1 D3.4.7 M5 °दम (for °दमः).

☞ The fragm. MS. G4 *ends* with 23$^{ab}$! It is mostly ignored hereafter.

23 $^{d}$) D3.4 (?gloss) बलदेवो (for रौहिणेयो).

24 $^{b}$) T2 G2 M3 पुरुषर्षभ. — 24$^{cd}$ = 5. 193. 52$^{ab}$. — $^{c}$) K1.2 एव (for एतद्). D3.4 अहं; Ca. d ध्रुवं (as in text).

25 $^{a}$) K3.4 B (except B2) Dn1 Ds D3.4.6.10 तस्माद्. — $^{b}$) S (except G5) °सुहृद्गणान्. — $^{d}$) K4 B (except B2) Dn1 Ds D3.4.6.8.10 द्रष्टास्मीति मतिर्मम.

26 $^{c}$) K3 B1.5 Dn1 D6 च (for सु-).

27 $^{b}$) B3 °ह्वत्रे; Ca. s °ह्वरे (as in text). — $^{d}$) M2 यायास्त्वं (for वर्तस्व).

28 K5 Dn1 om. (hapl.) 28$^{a}$–29$^{b}$. — $^{c}$) D3.4 अस्य (for तस्य). M (except M1) हि (for [अ]पि). K3.4 B1.4.5 D6.10 Ca साह्यं; B3 शक्त्या; Ds D3 सह्यं; T G2.3.5 युक्ता (for युक्त्या).

29 K5 Dn1 om. 29$^{ab}$ (cf. v.l. 28). — $^{c}$) K3 B (except B2) Dn1 D1.3.4.6 निर्विष्टः; Ds निसृष्टः. — $^{d}$) K3.4 B (except B2) Dn1 Ds D6.8.10 ह (for च).

30 $^{a}$) K (except K4) D1 ध्रुवं (for ध्रुवो). — $^{c}$) S यथा (for तथा). K4 Ds D3.10 ह्यरिविनाशोयं; K5 [अ]स्याभिनिवेशोयं. — $^{d}$) K1.2 B2 दृश्यते (for भारत).

31 $^{ab}$) T2 G2.5 transp. कृष्णम् and लोकम्. — $^{c}$) K5 D2.7 S अतो (for ततो). T2 G5 °पश्यामि (for °वर्तामि).

32 $^{a}$) B2 एतौ (for उभौ). — $^{c}$) K1 D8 °स्नेहोस्मि ते; B3 °स्नेहगतौ; T2 °स्नेहो यथा; G2 °स्नेहोस्म्यहं; G5 °स्नेहोप्यतो. — $^{d}$) K1.2 B2 D10 G3 नृप (for नृपे).

33 T2 G2 om. (hapl.) 33$^{cd}$. — $^{c}$) T1 कौरव्यं (for °व्यान्). — $^{d}$) K4 D2 G1.3.5 अवेक्षितुं; D1.3.4 उदी° (for उपे°). T1 नश्यमानमवेक्षितुं.

34 Before 34, S ins. वैशं°. — $^{b}$) G3 बांधवैः (for पाण्डवैः). — $^{d}$) K2.5 निर्वर्त्य; T G निमंत्र्य; Ca. d as in text.

Colophon. Dn2 D5.9 G4 missing. — *Sub-parvan:* K1.2 D7 T1 अभिनिर्याणयात्रा; K3 निर्याणयात्रा; K4 B1.4.5 Dn1 Ds D6.8.10 M अभिनिर्यात्रा; B3 अभियात्रा; D2 अभियानयात्रा. — *Adhy. name:* K5

K1 ins. after 5. 197. 21 (i.e. beforet he last colophon):

षट् श्लोकास्तु सहस्राणि अष्ट श्लोकशतानि च।
अष्टाशीति च वै श्लोका उद्योगं पर्व चोत्तमम्।
एतत्सुमहदाख्यानं श्रुत्वा पापैः प्रमुच्यते।
सर्वतीर्थाभिषेकश्च सर्वदानफलं लभेत्।
विप्रेभ्यो भोजनं देयं व्यासायाभरणानि च।
गावश्चन्दनवासांसि दद्याद्‌धुद्योगपर्वणि।
भारतस्य पदैकेन गङ्गाया दर्शनेन च।
विष्णोः स्मरणमात्रेण सर्वपापैः प्रमुच्यते।;

and ins. after the last colophon this date:

संवत् १६२२ वर्षे आश्विनवदि ३ भौमे लिखितमुद्योगपर्व। — K2 ins. after the last colophon, the first stanza of the next parvan followed by the date: १५३४ वर्षे श्रावणसुदि ९ वीरपुरे आद्यनागरजातीये। — K4 ins. after the last colophon: एतत्पर्वकथानुक्रमवर्णनं। — K5 ins. after the last colophon the date: संवत् १८८१ शके १७४७ कार्तिकमासे कृष्णपक्षे तृतीया[यां] भौमवासरे समाप्तः पर्व उद्योगः।, followed by this addition in Gujarati: लेईने पाछु जे न आपे तेने माथे सडता * * * पने ते हनुमान खाशे। निश्चे। खरी वात छे ते जाणजो॥ श्रीरस्तु॥ भट्ट भाऊ जागन्नाथनु लखेलू छे। घणी मेहेनत करीने समाप्ति करूं छे॥ जे लईने पाछु नहि आपे तो तेनु सत्यनाश जशे निश्चे निश्चे॥ — Dn1 D4 ins. after 5. 197. 21 (i.e. before the last colophon):

वैशंपायन उवाच।
यः सर्वं श्रृणुते राजन्निदं श्रीपरिवर्धनम्।
सर्वपापविनिर्मुक्तो लभते वाञ्छितं फलम्।
यो भूत्वा सावधानो वै श्रृणोति श्रावयत्यपि।
स वाञ्छितार्थं लभते पुत्रपौत्रसमन्वितः।
उद्योगं लभतेऽयं तु पाण्डवोद्योगसंश्रयात्।
श्रुतेऽस्मिन्नृपते दद्याद्ब्राह्मणेभ्यश्च दक्षिणाम्।
भोजयेद्द्विविधाहारैर्भक्ष्यभोज्यसमन्वितैः।
पाठकं च विशेषेण स्वर्णगोधनपूर्वकम्।
राजञ्जन्मेजय(!) त्वद्य त्वमप्येवं समाचर।
अतः परं भीष्मपर्व श्रृणु राजन्समाहितः।

— Dn2 ins. after the last colophon the date: शके १६६६ रक्ताक्षिनामसंवत्सरे आषाढे एकादश्यां समाप्तः। — D5 ins. after the last colophon: अत्र पर्वणि वृत्तान्ताः। राज्ञां दूतप्रस्थापने मन्त्रः। पुरोहितयानं। शल्यवरप्रदानं। इंद्रविजयः। संजययानं। प्रजागरं। विदुरवाक्यानि। सनत्सुजातीयं। यानसंधिः। भगवद्यानं। दंभोद्भवाख्यानं। मातलिवरान्वेषणं। गालवचरितं। विश्वरूपदर्शनं। विदुलापुत्रानुशासनं। कर्णोपनिवा(D51 °ना)दः। कर्णकुंतीसमागमः। अभिनिर्यात्रा। उलूकयानं। रथातिरथसंख्या। अंबोपाख्यानं चेति। — D1 ins. after the last colophon:

अथानु भीष्मपर्व भविष्यति। तस्यायमनुसंधिश्लोकः।
जनमेजय उवाच।
कथं युधिष्ठिरे वीराः कुरुपाण्डवसोमकाः।
पार्थिवाश्च महाभागा नानादेशसमागताः॥

उद्योगपर्वण्यमी वृत्तान्ताः। पुरोहितयानं। इंद्रविजयः। संजययानं। धृतराष्ट्रचिंता। प्रजागरः। विदुरवाक्यं। सनत्सुजातं। यानसंधिः। भगवद्यानं। सभाप्रवेशः। दंभोद्भवोपाख्यानं। मातलिवरान्वेषणं। गालवचरितं। विदुरापुत्रानुशासनं। कर्णोपनिवादः। कर्णकुंतीसमागमः। अभिनिर्याणयात्रा। उलूकयानं। रथातिरथसंख्या। अंबोपाख्यानं चेति।

अत्रापि * *संख्यातमध्यायानां महात्मना।
अध्यायसंख्यायास्तत्वं षडशीतिशतं स्मृतम्।
श्लोकाः सप्तसहस्राणि तावंत्येव शतानि च।
श्लोकाः षण्णवति प्रोक्तास्तथैवाष्टौ महात्मना।
व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधनाः॥
शुभमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु शान्तिं सर्वत्र सुखीभवन्तु लोकाः॥

संवत् १८२८ ज्येष्ठशुक्लदशम्यां गुरुवासरे काश्मिरीयसदानंदाभिधेन लिखितमिदमुद्योगपर्व। लेखकपाठकयोः श्रेयसे भूयात्॥ — D2 ins. after the last colophon:

अस्यानु भीष्मपर्व भविष्यति। यस्यादिः प्रतिसंधिः।
जनमेजय उवाच।
कथं युधिष्ठिरे वीराः कुरुपाण्डवसोमकाः।
पार्थिवाश्च महाभागा नानादेशसमागताः॥

उद्योगपर्वणि अमी वृत्तान्ताः। [पुरो]हितयानं। इंद्रविजयः। प्रजागरः। संजययानं। विदुरवाक्यानि। सनत्सुजातीयं। यानसंधिः। भगव[द्यानं]। मातलिवरान्वेषणं। गालवचरितं। सभाप्रवेशः। महापुरुषदर्शनं। विदुरापुत्रानुशासनं। कर्णोपविवादः। इंद्रवर्णनं। कुंतीकर्णसमागमः। भगवतः प्रतिवाक्यानि। अभिनिर्याणयात्रा। उलूकयानं। रथातिरथसंख्या। अंबो[पाख्यानं]। बलाबलपरीक्षा। सेनानिवेशश्चेति।

एतत्सुबहुवृत्तान्तं पञ्चमं पर्व भारते।
उद्योगपर्व निर्दिष्टं संधिविग्रहसंज्ञितम्।
अध्यायसंख्यया त्वत्र षडशीतं शतं स्मृतम्।
श्लोकानां षट् सहस्राणि नव श्लोकशतानि च।
श्लोकाश्च सप्तति प्रोक्ता दृष्टो ग्रन्थोऽत्र पर्वणि॥
शुभमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः॥

संवत् १६६२ समये वैशाखवदिद्वादशीशुक्रदिने।

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते॥

— D4 ins. after the last colophon:

शुभमस्तु संवत् १६६८ समये मार्गशीर्षद्वादशीगुरुवारे लिखितं रघुनाथेन। श्रीगोविन्द। श्रीरामकृष्णाभ्यां नमः। श्रीविश्वनाथाय श्रीकृष्ण कृष्ण राम राम॥

— D5 ins. after the last colophon the first st. of the Bhīṣmaparvan; then १६५६ वर्षे कीलकनाम्नि संवत्सरे माघशुक्लपौर्णमास्यां रवौ काश्यां विश्वेश्वरराजधान्यां श्रीमत्यां अग्नीश्वरसंनिधौ विदर्भदेशस्थभट्टनृसिंहसूनुना केशवेन लिखितमिदं पुस्तकमात्मार्थं परोपकारार्थं च॥ छ॥

— D6 ins. after the last colophon:

संवत् १७६० वर्षे मितिपौषमासेऽर्जुनपक्षे दिक्तिथौ चंद्रसुते लिखितं। वैद्यगिरिधर। तस्य आत्मज दुर * * * नगर विडोलीमध्ये भटजी ६श्रीजीवाजी। तस्यात्मजदेवेश्वरपठनार्थं। शुभं भूयात् लेखकपाठकयोः॥

— D7 ins. after the last colophon:

अस्यानु भीष्मपर्व भविष्यति।
श्रीजनमेजय उवाच।
कथं युधिष्ठिरे वीराः कुरुपाण्डवसोमकाः।
पार्थिवाश्च महाभाग नानादेशसमागताः॥

अथ उद्योगपर्वणि इमी वृत्तान्ताः। श्रीपुरोहितयानं। इंद्रविजयदर्शनं। संजययानं। प्रजागरः। विदुरवाक्यानि। सनत्सुजातीयं। यानसंधिः। भगवद्यानं। सभाप्रवेशः। दंभोद्भवोपाख्यानं। मातलिवरान्वेषणं। गालवचरितं। कृष्णद्रोणधृतराष्ट्रगांधारीविदुरवाक्यानि। दुर्योधनकर्णदुःशासनशकुनिदुर्मंत्रितं। कुंतीविदुरवाक्यानि। विदुरापुत्रानुशासनं। श्रीकृष्णप्रयाणं। कर्णभेदः। पुनर्भीष्मद्रोणचिंता। कुंतीकर्णसमागमः। कुंतीपंचपुत्रवरप्रदानं। श्रीकृष्णमंत्रः। उलूकयानं। पांडवप्रयाणयात्रा। शिबिराभिमर्दः। दुर्योधनप्रयाणं। रथातिरथसंख्या। अंबोपाख्यानं। परस्परजयप्रकटनमिति॥ श्री॥ छ॥ श्री॥

उद्योगपर्व यः श्रुत्वा चातुर्मास्ये विशेषतः।
सर्वान्कामानवाप्नोति दीर्घमायुश्च विन्दति।
श्रुते पर्वणि यो भक्त्या संपूज्य पुरुषोत्तमम्।
व्यासाय ददते दानं आनन्त्यायोपतिष्ठति।
तेन दानेन सुप्रीतो जायते मधुसुदनः।
व्यासरूपी च भगवान्सूर्यो नारायणः प्रभुः।
उद्योगपर्व श्रुत्वा तु ब्राह्मणान्भोजयेत्पुनः।
प्रदेयं काञ्चनं वापि सर्वपापविशुद्धये।
पुस्तकस्यापि कर्तव्या पूजा परमशोभना।
वस्त्रपुष्पफलैश्चैव शारदा प्रीयतामिति।
महाभारतपर्वैकं यो ददाति द्विजातये।
श्लोकानां संख्यया राजन्तावच्च युगसंख्यया।
स्वर्गलोकमनुप्राप्य पितृभिः सह मोदते।
भारतं पञ्चमो वेदो यो ज्ञेयस्तत्ववेदिभिः।
श्रोतव्यो वा महाराज सर्वपापप्रशान्तये।
उद्योगपर्व यः श्रुत्वा श्रद्धावान्सततोत्थितः।
आजन्मसंचितात्पापान्मुच्यते नात्र संशयः।
उद्योगपर्व श्रुत्वा यः शतभोज्यं च दापयेत्।
सर्वतीर्थफलं चैव सर्वयज्ञफलं लभेत्।
अश्वमेधसहस्रस्य राजसूयशतस्य च।
गवां कोटिसहस्रस्य फलं प्राप्नोति मानवः।
तेन ब्रह्मा च रुद्रश्च विष्णुश्च वसवस्तथा।
प्रसन्ने वाचके विप्रे प्रसन्नाः सर्वदेवताः।
धर्मार्थकाममोक्षाणां फलं संप्राप्नुयान्नरः।
विधिवद्भोजयेद्राजन्मधुपायसमुत्तमम्।
उद्योगे भारतश्रेष्ठ सर्वकामसमन्वितः।
भोजनं भोजयेद्विप्रान्गन्धमाल्यैरलंकृतान्।
शुक्लाम्बरधरस्तत्र शुचिर्भूत्वा स्वलंकृतः।
यश्चानेन प्रकारेण भारतं श्रावयेन्नरः।
तथा दानस्य माहात्म्यं लोकानुद्धरति प्रभो॥

इति श्रीमहाभारते उद्योगपर्व समाप्तं। संवत् १८३७ वर्षे शके १७०३ प्रवर्तमाने मासोत्तममासे ज्येष्ठमासे सितेतरपक्षे तृतीया[यां] मन्दवासरे पूर्णीकृतमिदमुद्योगपर्व। राजन्यपुरस्थेन भ० विष्णुदत्तेन लिखितं। दीहेणवासी शाहा पुरुषोत्तमदासस्येदं पुस्तकं परोपकारार्थम्। शुभं भवतु। कल्याणमस्तु श्रीकृष्णो विजयते। श्रीराम जय राम जय जय राम॥ श्रीराम। श्रीराम। श्रीराम। श्रीराम। श्रीराम॥

— D8 ins. after the last colophon: उद्योगपर्ववर्णनं।

सूत उवाच।
एवमेतत्सुवृत्तान्तं पञ्चमं पर्व भारतम्।
उद्योगपर्व निर्दिष्टं संधिविग्रहसंस्थितम्।
अध्यायानां च संख्या च षडशीतिशतं स्मृतम्।
श्लोकाः सप्तसहस्राणि तावन्त्येव शतानि च।
श्लोकाश्च नवति प्रोक्तास्तथैवाष्टौ महात्मना।
व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधनाः।
वैशंपायन उवाच।
शृणु राजन्विधिमिमं फलं यच्चापि भारते।
श्रुतान्नवति राजेन्द्र यत्त्वं मामनुपृच्छसि।
दिवि देवा महीपालाः क्रीडार्थमवनीं गताः।
ऋषीणां देवतानां च संभवो वसुधातले।
अत्र रुद्रास्तथा साध्या विश्वेदेवाश्च शाश्वताः।
आदित्याश्चाश्विनौ देवौ लोकपाला महर्षयः।
गुह्यकाश्च सगन्धर्वा नागा विद्याधरास्तथा।
सिद्धा धर्मः स्वयंभूश्च मुनिः कात्यायनो वरः।
गिरयः सागरा नद्यस्तथैवाप्सरसां गणाः।
ग्रहाः संवत्सराश्चैव अयनान्यृतवस्तथा।
स्थावरं जंगमं चैव जगत्सर्वं सुरासुरम्।

भारताद्भरतश्रेष्ठ एकस्थमिह दृश्यते।
तेषां श्रुत्वा प्रतिष्ठां तं नामकर्मानुकीर्तनात्।
कृत्वापि पातकं घोरं सद्यो मुच्येत मानवः।
इतिहासमिमं श्रुत्वा यथावदनुपूर्वशः।
संयम्यान्तःशुचिर्भूत्वा पारं गत्वा तु भारते।
तेषां श्राद्धानि देयानि रत्नानि विविधानि च।
गावः कांस्योपदोहाश्च कन्याश्चैव स्वलंकृताः।
सर्वकामगुणोपेता धनानि विविधानि च।
भवनानि विचित्राणि भूमिर्वासांसि काञ्चनम्।
वाहनानि च देयानि हया मत्ताश्च वारणाः।
शयनं शिबिकाश्चैव स्यन्दनाश्च स्वलंकृताः।
यद्यद्गृहे वरं किंचिद्यद्यदस्ति महद्वसु।
तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः।
श्रद्धया परया दत्तं क्रमशस्तस्य पारगः।
सत्यार्जवयथादान्तः शुचिः शौचसमन्वितः।
श्रद्दधानो जितक्रोधो यथा सिध्यति तच्छृणु।
पर्व उद्योगमासाद्य काञ्चनं संप्रदापयेत्।
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम्।
उदितादित्यसंकाशं ज्वलन्तमनलोपमम्।
विमानं विबुधैः सार्धमारुह्य दिवि गच्छति।
वर्षायुतानि भवने संक्रम्य दिवि मोदते।
षष्ठे द्विगुणमस्तीति सप्तमे त्रिगुणं फलम्।
शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः।
संस्कृतः सर्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः।
ईदृशाद्वाचकाद्राजञ्श्रुत्वा भारत भारतम्।
नियमस्थः शुचिः श्रोता शृण्वंस्तत्फलमश्नुते।
जाम्बूनदमयैर्दिव्यैर्गवाक्षैः सर्वतो वृतम्।
सेवितं चाप्सरःसंघैर्देवैराकाशचारिभिः।
विमानं समधिष्ठाय श्रिया परमया ज्वलन्।
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः।
मोदते दैवतैः सार्धं दिवि देवो यथामरः।
उद्योगे भारतश्रेष्ठ हविष्यैस्तर्पयेद्द्विजान्।
पूपकैश्च विशेषेण सर्वमन्नं प्रदापयेत्।
यथान्यायं गन्धमाल्यैः पूजयेच्च पृथक्पृथक्।
श्रुतेऽस्मिन्नृपते दद्याद्ब्राह्मणेभ्यश्च दक्षिणाम्।
भोजयेद्विविधाहारैर्भक्ष्यभोज्यसमन्वितैः।
पाठकस्य विशेषेण स्वर्णगोदानपूर्वकम्।
संहितापुस्तकान्राजन्प्रयतः शिष्यसंमितान्।
हिरण्यं च सुवर्णं च दक्षिणामथ दापयेत्।
देवताः कीर्तयेत्सर्वा नरनारायणादिकाः।
ततो गन्धैश्च माल्यैश्च स्वलंकृत्य द्विजोत्तमान्।
तर्पयेद्विविधैः कामैर्दानैरुच्चावचैस्तथा।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः।
प्राप्नुयाच्च क्रतुफलं श्रुत्वा पर्वणि पर्वणि।

वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः।
भविष्यं श्रावयेद्विद्वान्भारतं भरतर्षभ।
वाचकं भरतश्रेष्ठ भोजयित्वा स्वलंकृतम्।
वाचके तु परे तुष्टे शुभगा प्रीतिरुत्तमा।
ब्राह्मणेषु च तुष्टेषु प्रसन्नाः सर्वदेवताः।
इत्येष विधिरुद्दिष्टो मया ते द्विपदां वर।
श्रद्दधानेनैव भाव्यं यन्मां त्वं परिपृच्छसि।
भारतश्रवणाद्राजन्स्मरणाच्च द्विजोत्तम।
सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता।
भारतं शृणुयान्नित्यं भारतं परिकीर्तयेत्।
भारतं भवने यस्य तस्य देवाः स्थितास्त्रयः।
भारतं परमं पुण्यं भारते विविधाः कथाः।
भारतं सेव्यते दिव्यैर्भारतं परमं पदम्।
भारतं सर्वशास्त्राणां सुगमं भरतर्षभ।
भारतात्प्राप्यते श्रेयो मोक्षस्त्वेतद्ब्रवीमि ते।
महाभारतमाख्यानं क्षितिं गां च सरस्वतीम्।
ब्राह्मणं केशवं चैव कीर्तयन्नावसीदति।
आदौ चान्ते च मध्ये च विष्णुः सर्वत्र गीयते।
यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः।
तच्छ्रोतव्यं मानुषेण परमं पदमिच्छता।
एतत्पवित्रं परममेतद्धर्मनिदर्शनम्।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता।

वैशंपायन उवाच।

यः सर्वं शृणुते राजन्निदं श्रीपरिवर्धनम्।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता।
सर्वपापविनिर्मुक्तो लभते वाञ्छितं फलम्।
यो भूत्वा सावधानो वै शृणोति श्रावयत्यपि।
स वाञ्छितार्थं लभते पुत्रपौत्रसमन्वितः।
उद्योगं लभते जन्तुः पाण्डवोद्योगसंश्रयात्।
जनमेजय हे राजंस्त्वमप्येवं समाचर।
अतः परं भीष्मपर्व शृणु राजन्समाहितः।
भारतं भानुमानिन्दुर्यदि न स्युरमी त्रयः।
अज्ञानतिमिरान्धस्य कावस्था जगतो भवेत्।
य इदं कीर्तयेद्विद्वान्पश्येत शृणुयान्नरः।
स ब्रह्मणः स्थानमेत्य प्राप्नुयाद्देवतुल्यताम्।
इदं हि वेदैः समितं पवित्रमिदमुत्तमम्।
स्तव्यानामुत्तमं चेदं पुराणमृषिसंयुतम्।
अस्मिन्नर्थश्च धर्मश्च निखिलेनोपदेक्ष्यते।
इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी।
अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान्।
कार्ष्णं वेदमिमं श्रुत्वा श्रावयित्वार्थमश्नुते।
भ्रूणहत्याकृतं चापि पापं जह्यान्न संशयः।
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः।
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा।

महीं चापि जयेत्कृत्स्नां शत्रूंश्चापि पराजयेत् ।
इदं पुंसवनं श्रेष्ठमिदं स्वस्त्ययनं महत् ।
महिषीयुवराजाभ्यां श्रोतव्यं बहुशस्तथा ।
अर्थशास्त्रमिदं मुख्यं धर्मशास्त्रमिदं परम् ।
मोक्षशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ।
संप्रत्याचक्षते चेदं तथाख्यास्यन्ति चापरे ।
पुत्राः शुश्रूषवः सन्ति प्रेक्ष्याश्च प्रियकारिणः ।
शरीरेण कृतं पापं वचसा मनसैव च ।
सर्वं तत्यजते क्षिप्रमिदं शृण्वन्नरः सदा ।
धर्म्यं यशस्यमायुष्यं स्वर्ग्यं पुण्यं तथैव च ।
य इदं मानवो भक्त्या पुण्यान्वै ब्राह्मणाञ्शुचीन् ।
श्रावयेत महापुण्यं तस्य धर्मः सनातनः ।
योऽधीते प्रथमं नित्यं ब्राह्मणो नियतव्रतः ।
चतुरो वार्षिकान्मासान्सर्वपापैः प्रमुच्यते ।
आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति ।
उभे संध्ये जपन्किंचित्सर्वपापैः प्रमुच्यते ।
यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः ।
स दीर्घमायुः कीर्तिं च स्वर्गतिं प्राप्नुयान्नरः ।
चत्वार एकतो वेदा महाभारतमेकतः ।
सुरर्षिभिः समागम्य तुलामारोपितं पुरा ।
महत्वाच्च गुरुत्वाच्च महाभारतमुच्यते ।
गुरुविप्रान्नमस्कृत्य मनोबुद्धिसमाधिभिः ।
संपूज्य च द्विजान्सर्वांस्तथान्यान्विदुषो जनान् ॥
यो भारतं पूजयति वस्त्रदानै-
धूँपैः फलैश्चन्दनपुष्पपत्रैः ।
सुवर्णदानेन यथा च शक्त्या
लोकं स गच्छेत्फलमस्य योनेः ॥
इ इमां कुरुते पूजां समासौ पुस्तकस्य च ।

सर्वान्कामानवाप्नोति पुत्रपौत्रसमन्वितः ।
भारतं निन्दयेद्यश्च पुमानधम एव सः ।
ब्रह्महत्यासमं पापं भवेत्तस्य न संशयः ।
अस्यैव धर्मशास्त्रस्य निन्दने क्षीयते कुलम् ।
अश्रद्धेयो न पूजार्हो वक्तव्यं ते न युज्यते ।
संनिधाने न गन्तव्यं तस्य यो निन्दयेदिदम् ।
श्रुतं स्मृतं मतं येन महापातकनाशनम् ।

इति श्रीमहाभारते शतसाहस्रसंहितायां वैयासिक्यामुद्योगपर्व समाप्तं ॥ — This is followed by the first stanza of Bhīṣmaparvan; then the table of contents, which is followed by:

संपोष्यं सदपत्यवत्परकराद्रक्ष्यं च सुक्षेत्रवत्
संशोध्यं व्रणिनोऽङ्गवत्प्रतिदिनं वीक्ष्यं च सन्मित्रवत् ।
बध्यं वध्यवदश्लथं न हि न विस्मर्यं हरेर्नामवत्
नैवं सीदति पुस्तकं किल कदाप्येतद्गुरूणां वचः ॥

शके ११६ [? १६१६] भावसंवत्सरे श्रावणवदि १३ ते दिवशीं त्रिंबकसूनुगणेशेन लिखितं ॥

— D10 ins. after the last colophon: उद्योगपर्वण्यमी वृत्तान्ताः । राज्ञां दूतप्रस्थापने मंत्रः । पुरोहितयानं । शल्यवरप्रदानं । इंद्रविजयः । संजययानं । प्रजागरः । विदुरवाक्यानि । सनत्सुजातीयं । यानसंधिः । भगवद्यानं । दम्भोद्भवाख्यानं । मातलिवरान्वेषणं । गालवचरितं । विश्वरूपदर्शनं । विदुलापुत्रानुशासनं । कर्णोपनिवादः । कर्णकुंतीसमागमः । अभिनिर्यात्रा । उलूकयानं । रथातिरथसंख्या । अंबोपाख्यानं । युद्धसंनाहश्च ॥ अतः परं भीष्मपर्व भविष्यति ॥ शके १६८८ व्ययनामसंवत्सरे भाद्रपदासितत्रयोदश्यां गोविंददशपुत्रेण किंचिज्जीर्णमेव पूर्वोत्तरभागाभ्यां पूर्त्यर्थं लिखितं ॥ श्रीरस्तु ॥ छ ॥ छ ॥

# APPENDIX I

This Appendix comprises a series of additional passages found in different MSS. which have been cited in the foregoing footnotes to the constituted text, but which, for various reasons, were not quoted there in extenso. They are mainly passages which were too long to be included in the footnotes; but along with them there will be found a certain number of short unimportant passages also, which could have been very easily accomodated in the footnotes, but which being found in single MSS. or in a very small group of cognate MSS. have been relegated to this Appendix as being of no special value for critical purposes.

The variants cited here are of the same order as those of the additional lines noted in the footnotes to the constituted text; in other words, the variants of monosyllabic verse-filling particles (such as च-वै-तु-हि) and adverbs (such as तथा-तदा-ततः, एव-एवं), discrepant readings of single MSS., corrupt readings, and common doublets (वेदि-वेदी, रोम-लोम) have been generally ignored, scribes' errors have been silently corrected. Furthermore, the variants of the short prose formulaic references to the speaker (such as वैशंपायन उवाच) have been uniformly ignored here.

## 1

After 5. 39. 31, N (K8 missing) T G1.4 ins.:

असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि ।
उपलभ्याप्यविदितं विदितं चाप्यनुष्ठितम् ।
पापोदयफलं विद्वान्यो नारभति वर्धते ।
यस्तु पूर्वकृतं पापमविमृश्यानुवर्तते ।
सोऽन्यापराधे दुर्मेधा विषमे विनिपात्यते । [5]
मन्त्रभेदस्य षड् प्राज्ञो द्वाराणीमानि लक्षयेत् ।
अर्थसंततिकामश्च रक्षेदेतानि नित्यशः ।
मदं स्वप्नमविज्ञानमाकारं चात्मसंभवम् ।
दुष्टामात्येषु विश्रम्भं दूताच्चाकुशलादपि ।
द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृपः । [10]
त्रिवर्गचरणे युक्तः स शत्रूनधितिष्ठति ।
न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य च ।
धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ।
नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति ।
अनात्मनि श्रुतं नष्टं नष्टं श्रुतमनग्निकम् । [15]
मत्या परीक्ष्य मेधावी बुद्ध्या संपाद्य चासकृत् ।
श्रुत्वा दृष्ट्वाथ विज्ञाय प्राज्ञो मन्त्रं समाचरेत् ।

## 2

After adhy. 44, all MSS. (except D9.10 G2; K2.3.5 missing) ins. the following addl. adhy. (K4 om. lines 2–25; T G1.3–5 om. lines 5–23):

सनत्सुजात उवाच ।
शोकः क्रोधश्च लोभश्च कामो मानः परासुता ।
ईर्ष्या मोहो विवित्सा च कृपासूया जुगुप्सुता ।
द्वादशैते महादोषा मनुष्यप्राणनाशनाः ।
एकैकमेते राजेन्द्र मनुष्यान्पर्युपासते ।
यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति । [5]
स्पृहयालुरुग्रः परुषो वावदान्यः
क्रोधं बिभ्रन्मनसा वै विकत्थी ।
नृशंसधर्माः षडिमे जना वै
प्राप्याप्यर्थं नोत सभाजयन्ते ।

---

### 1

(L. 1) T1 G1.4 ससम्यक्; **Ca.s** असम्यक् (as above). T1 G1.4 नानासूत्रशतैरपि (for the posterior half). **Cs** cites स्वकुशलैः. — (L. 2) B D3–6 T2 **Cn** उपलभ्यं **Cs** उपलभ्य (as above). B D3–6 T2 च; Ds D10 हि (for [अ]पि). B (except B3) D (except D1.2.8.9) T2 चाननुष्ठितं (for चाप्य°). — (L. 3) K2.5 T1 G4 पापोदयं; **Ca.s** पापोदय- (as above). K4 D2.7 **Ca.s** नाचरति; D1 **Cn** नारमते; T1 G1.4 वाचरति (for नारभति). — (L. 4) B1.2.5 T2 पूर्वं कृतं; T1 G4 पूर्वकृते; **Ca.s** पूर्वकृतं (as above). Ds D9.10 अविमृज्यानुवर्तते; D1.3.4 अव-मृश्यानु°; T1 G1.4 नानुमृश्यानु(T1 °भि)वर्तते; **Ca.s** as above. — (L. 5) B Dn Ds D2m.3–6.10 T2 **Cs** अगाधपंके (for सोऽन्यापराधे). K4 D9 विषमेषु निपात्यते; D1 विषयैर्विनि°. — (L. 6) T1 G1.4 अत्र (for मन्त्र-). K2 मूलानि (for द्वाराणि). K1.4 D3.9 एतानि (for इमानि). — (L. 8) K2 मदः; Dn1 D6.9 मंद-; D1 पदं; T1 G1.4 अथ; **Ca** मदं (as above). D1.8 **Ca.s** अवज्ञानं. — (L. 9) K4 Dn1 D1–4.8.9 T1 G1 दूतांश्च (for दूताच्च). K4 Dn1 D1–4.7–9 T1 G1 कुशलान्. — (L. 11) K4.5 B3 Dn1 D1.2.5–7.9 त्रिवर्गाचरणे. B5 T1 G1.4 अधिगच्छति; **Ca.s** as above. — (L. 12) K2.5 B Dn D1.6.8–10 T2 वा (for च). — (L. 14) K1.5 प्रक्षिप्तं (for पतितं). — (L. 15) K2 D7.9 हुतं नष्टम् (for नष्टं श्रुतम्). — (L. 16) K5 Ds D8 **Ca.s.np** ज्ञात्वा; T1 G1.4 बुध्या; **Cap.sp** मत्या (as above). — (L. 17) K1.4 D3–6.9 T G1.4 च (for [अ]थ). K1.5 B Dn2 Ds D1.2.5–8.10 T2 **Cs** प्राज्ञैर् (for प्राज्ञो). K5 B Dn2 Ds D1.5.6.10 T2 **Cs** मैत्रीं (for मन्त्रं). Ds D10 समारमेत् (for °चरेत्).

### 2

For the omission of this passage from the constituted text, see note after adhy. 44; see below also. — (L. 1) D3.4 transp. शोकः and क्रोधः. D1 मोहः; T G1.3–5 M दंभः; **Cs** लोभः (as above). K1 B Ds D5 (after corr.).7.8 **Cn.s** मोहः; D5 (before corr.).6 T G1.3–5 M **Cnp** लोभः (for मानः). — (L. 2) K1 B1.3.4 Ds D1.2.5–8 मानो (for मोहो). B D2–6 T2 विधित्सा (for विवित्सा). K1 T1 [अ]कृपा (for कृपा). K1 Dn D1–8 T2 G1.3.4 M जुगुप्सता; B Ds जुगुप्सिता; **Ca** as above. — (L. 3) D1 मनुष्यस्य प्रणाशनाः. — (L. 4) Om. in B Ds D1. K1 D8 एकैकशस्तु; D2 एकैक एते; T1 एकैकमेव. K1 D2.7.8 T G1.3–5 M मनुष्यं. — (L. 5) Om. in M. Ds **Cs** मूढबुद्धिर्व्यवस्यते. — (L. 6) K1 D1.5.7.8 M स्पृहालुः; **Ca.s** स्पृहयालुः (as above). D3.4 स्पृहयालुरुग्णः. K1 B3 Ds D1.2.5 (before corr.).6–8 M पुरुषः; **Ca.s** परुषः (as above). K1 B3 Ds D1–8 M om. वा. **Cs** cites वदान्यः; **Ca** अवदान्यः (as above). — (L. 7) D1 कोपं (for क्रोधं). K1 D2.7.8 बिभ्रत् कोपं (D7 क्रोधं); M चाक्रोशान्बिभ्रत् (for क्रोधं बिभ्रत्). M om. वै. K1 D1.7.8 यः (for वै). M कदर्थी (for विकत्थी).

संभोगसंविद्विषमोऽतिमानी [ 10 ]
दत्त्वा विकत्थी कृपणो दुर्बलश्च ।
बहुप्रशंसी वनिताद्विट् सदैव
सप्तैवोक्ताः पापशीला नृशंसाः ।
धर्मश्च सत्यं च तपो दमश्च
अमात्सर्यं ह्रीस्तितिक्षानसूया । [ 15 ]
दानं श्रुतं चैव धृतिः क्षमा च
महाव्रता द्वादश ब्राह्मणस्य ।
यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वार्थितो यो [ 20 ]
नास्य स्वमस्तीति च वेदितव्यम् ।
दमस्त्यागोऽथाप्रमाद इत्येतेष्वमृतं स्थितम् ।

एतानि ब्रह्ममुख्यानां ब्राह्मणानां मनीषिणाम् ।
सद्वासद्वा परीवादो ब्राह्मणस्य न शस्यते ।
नरकप्रतिष्ठास्ते वै स्युर्य एवं कुर्वते नराः । [ 25 ]
मदोऽष्टादशदोषः स स्यात्पुरा योऽप्रकीर्तितः ।
लोकद्वेष्यं प्रातिकूल्यमभ्यसूया मृषावचः ।
कामक्रोधौ पारतन्त्र्यं परिवादोऽथ पैशुनम् ।
अर्थहानिर्विवित्सा च मात्सर्यं प्राणिपीडनम् ।
ईर्ष्या मोहोऽतिवादश्च संज्ञानाशोऽभ्यसूयिता । [ 30 ]
तस्मात्प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितम् ।
सौहृदे वै षड्गुणा वेदितव्याः
प्रिये हृष्यन्त्यप्रिये च व्यथन्ते ।
स्यादात्मनः सुचिरं याचते यो
ददात्ययाच्यमपि देयं खलु स्यात् । [ 35 ]

---

Cs मनसा वै विकत्थी (as above); Csp मनसा विप्रकर्षी. — (L. 8) D7 नृशंसवर्णाः; M त्यक्तस्वधर्मः; Ca.s नृशंसधर्माः (as above). D1.2 सदा; D3.4 स्युः; M तु (for वै). K1 D8 नृशंसधर्मा (D8 °जन्मा) च जना ध्रुवं सदा. — (L. 9) K1 D8 Ca.s सदोपभुंजते; B3 Ds D3.4 सभाजयंति; D2.7 संतो भजते. D1 प्राप्यापदं लोभमद्योपभुंजते; M संप्राप्यार्थे नोत संभावयंति. — (L. 10) D1 संभोगविद्वेषं; D2 संभोगसंपद्विषमो; D7 संभोगविद्विषमो; Cs as above. K1 D8 [अ]वमानी; B1.2.5 D1–4.7 [अ]तीत्रमानी; M1.3.4 [अ]थ मानी; Cs [अ]भिमानी (for ऽतिमानी). — (L. 11) M कदर्थी; Cs विकत्थी (as above). K1 D1.2.7.8 [अ]वलीयान्; M दुर्बलीयान् (for दुर्बलश्च). — (L. 12) K1 B2.5 D1.2.7.8 M वर्गप्रशंसी (for बहु°). B2 वंदितद्विट्; D7 M1 वनितां; M2–5 वंदिवत् (for वनिताद्विट्). K1 D8 वनितावमानी (for वनिताद्विट् सदैव). B (except B4) Dn1 Ds D1.2 M2–5 तथैव; D7 M1 च द्वेष्टा (for सदैव). — (L. 16) M श्रुतिश्च (for श्रुतं). — (L. 17) K1 महाव्रतानि; Ca.s महाव्रता (as above). — (L. 18) Ds ये; Ca यः (as above). K1 B1.3.5 D1.2.7.8 M Cs om. न. B3 Ca प्रभवेत्; D2 प्रच्यवते; M प्रवसेत्; Cs प्रच्यवेत् (as above). B2 Dn2 Ds2 D1–8 M द्वादशेभ्यः; Cs द्वादशभ्यः (as above). — (L. 19) D8 om. अपि. B2 वसुधां; Ca.s पृथिवीं (as above). K1 D1.2.8 Ca प्रशासन्; M प्रशिष्यात्; Ca स शिष्यात् (as above). — (L. 20) B (except B4) Ds Cs वान्वितो यः (Cs वा); D3.4 नान्वितो वा; M1 वावशिष्टः; M2 वावशिष्टं; M3.5 वा विशिष्टं; M4 वापि शिष्टां (for वार्थितो यः). K1 D1.2.7.8 त्रिभिर्द्वाभ्यामेकतमेन वापि. Ca एकेनापि. — (L. 21) M स वेदितव्यः; Ca स महद्व्रतो वा; Cs च वेदितव्यं (as above). — (L. 22) K1 Ds2 D1.2.7.8 अप्रमादश्च (for अथाप्रमादः). K1 Ds D2.7 एतेष्वमृतमाहितं. — (L. 23) K1 D2.7.8 Cap.sp ब्रह्मजात्यानि; Ca.s ब्रह्ममुख्यानां (as above). — (L. 24) T G1.3–5 ब्राह्मणे न प्र(T2 G1 °णेन न)-शस्यते. — (L. 25) Hypermetric! B1.3–5 Dn Ds D3–7 M2.4 om. वै. T G1.3–5 M3.5 च; M1 हि (for वै). B2 D1 नरकस्य प्रतिष्ठास्ते. K1 D8 य एनं; G5 असूयां. B3 Dn2 कुरुते (for कुर्वते). K1 D8 सदा; Dn D1.2 जनाः (for नराः). — (L. 26) K1 T1 G5 M दमः (for मदः). K1 B1.2.5 Ds D1–4.5.7.8 स्यात् (for स). K4 Dn2 D1.3.4 पुरा यो न; B2 Ds D8 Cs पुरा योत्र; D5.7 पुरा यो नः (for स्यात्पुरा यः). K4 B2 Dn2 Ds D1.3–5.7.8 Cs प्रकीर्तितः; Cn [अ]प्रकीर्तितः (as above). K1 B1.5 D2 पुरा योनुप्रकी(B5 °व)र्तितः; T G1.3–5 M लोमशेन प्रकीर्तिताः (T1 G1.5 °तः; M1.3–5 °तं). — (L. 27) K1 D8 T1 G5 M1 लोकद्वेषः; K4 M2–5 °द्वेषं; B (except B3) Ds G3 Cs °द्विष्टं; D1.3.5 °द्वेष्यः (for °द्वेष्यं). — (L. 28) D1 कामं क्रोधं; D8 कामः क्रोधः. K1 D7.8 पराधैन्यं; K4 D1.2 T G1.4.5 M Cs पराधीन्यं; G3 परौ नित्यं (for पारतन्त्र्यं). — (L. 29) B Dn Ds D3–6 Ca.s विवादश्च (for विवित्सा च). — (L. 30) B3 Dn D3–6 Cn मोदः (for मोहः). D2.7.8 विवादः; T G1.3–5 M [ऽ]ति(T1 °भि)मानः; Cn अतिवादः (as above). Dn1 मिथ्या ईर्ष्यातिवादश्च. B3 D7.8 G3 M1.4 अभ्यसूयता; T ह्यनार्यता; G1.4.5 [अ]प्यनार्यता; Cs as above. — (L. 31) K1 D1.2 मन्येत; Cs माद्येत (as above). T G1.3–5 M सतां (for सदा). — (L. 32) D2 सुहृदः; Cs सौहृदं; Ca as above. — (L. 33) K1 D1 T1 G3–5 प्रहृष्यंति; Ca.s हृष्यंति (as above). K1 B3 व्यथंति; D7 व्यथेत; Ca.s as above. M (except M1) प्रियं प्राप्य न व्यथते कदाचित्. — (L. 34) Ds Cs आत्मने; D5.6 आत्मानं; T1 आत्मना; Ca आत्मनः (as above). K1.4 B3 Dn1 Ds D3.4.5 m.s

इष्टान्पुत्रान्विभवान्स्वांश्च दारा-
नभ्यर्थितश्चार्हति शुद्धभावः ।
त्यक्तद्रव्यः संवसेन्नेह कामा-
द्भुङ्क्ते कर्म स्वाशिषं बाधते च ।
द्रव्यवान्गुणवानेवं त्यागी भवति सात्त्विकः । [ 40 ]
पञ्च भूतानि पञ्चभ्यो निवर्तयति तादृशः ।
एतत्समृद्धमप्यूर्ध्वं तपो भवति केवलम् ।
सत्त्वात्प्रच्यवमानानां संकल्पेन समाहितम् ।
यतो यज्ञाः प्रवर्धन्ते सत्यस्यैवावरोधनात् ।
मनसान्यस्य भवति वाचान्यस्याथ कर्मणा । [ 45 ]
संकल्पसिद्धं पुरुषमसंकल्पोऽधितिष्ठति ।
ब्राह्मणस्य विशेषेण किंचान्यदपि मे शृणु ।
अध्यापयेन्महदेतद्यशस्यं
वाचो विकारं कवयो वदन्ति ।
अस्मिन्योगे सर्वमिदं प्रतिष्ठितं [ 50 ]
ये तद्विदुरमृतास्ते भवन्ति ।
न कर्मणा सुकृतेनैव राज-
न्सत्यं वदेज्जुहुयाद्वा यजेद्वा ।

---

**Ca. s. np** सुहितं ; D1 चाहितं ; D2 यद्धितं ; D7 त्वहितं; T1 सुखिता ; T2 सुखितो ; G1. 3. 4 सहितो ; G5 संनिहितो ; M1 सुविहितो (for सुचिरं). T2 G1. 4. 5 याचितो ; G3 याचिते. Ds यत्; G3 [अ]पि; **Cs** यः (as above). M2–5 अहिताय च याचते यो ददाति. — (L. 35) M2–5 om. ददाति. G5 [अ]देयं; **Ca. s** अयाच्यं (as above). D1 [अ]देयं; **Ca. n. s** देयं (as above). — (L. 36) T2 G5 इष्टापूर्तं (for इष्टान्पुत्रान्). D8 चापि; T1 चात्म- (for स्वांश्च). G3 इष्टापूर्तं विषयं स्वांश्च दाराः; G4 इष्टापूर्तं स्वांश्च दारानपत्यं; M1. 2. 5 इष्टापूर्तं विभवं स्वांश्च दारान्; M3. 4 इष्टान्पुत्रान् पूर्वं विभवं स्वांश्च दारान्. — (L. 37) K1 D1. 2. 8 चाहतान्; K4 Ds D3. 4. 7 T G1. 3–5 M चार्हते; B2. 5 D3–6 चार्हता. D2 शुद्धभावान्. — (L. 38) T G1. 3–5 त्यक्तद्रव्यैः; **Ca. s** as above. K4 सवसन्नेह ; D3. 4 सेवते नेह ; D8 संचयन्नेह ; T G1. 3–5 M संवसते न ; **Ca. s** संवसेन्नेह (as above). K4 Dn1 D1. 5–8 T1 G3 M1 (*sup. lin.* as above). 3–5 कामान्; M4 (*inf. lin.*) कामैः ; **Ca. n** कामात् (as above). — (L. 39) G1. 4. 5 ins. च after भुङ्क्ते. **Cap. np** स्वशिवं ; **Cnp** स्वासितं ; **Cs** आशिषं (for स्वाशिषं). D7 M (except M1) वोधते; G3. 4 साधते; **Ca. s** बाधते (as above). — (L. 40) D1 transp. द्रव्यवान् and गुणवान्. K1 D5. 6. 8 ह्येव; K4 B1. 2. 4 Ds ह्येवं ; D2 T1 चैव ; D7 होत्री ; T2 G1. 4 M यश्च ; G3. 5 कश्चित्; **Cs** एव; **Ca** एवं (as above). T G1. 3–5 M तादृशः ; **Ca. s** सात्त्विकः (as above). — After line 40, M (except M1) ins.:

अप्रमादोऽष्टदोषः स्यात्तान्दोषान्परिवर्जयेत् ।
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।
[ = 5. 43. 21^abcd. ]

M2 cont.:

अतीतानागतेभ्यश्च मुक्तो ह्येतैः सुखी भवेत् ।
[ = 5. 43. 21^ef. ]

— S om. line 41. — (L. 42) K1 D2. 7. 8 **Cs** अप्यूर्द्धं; T G1. 4 M अत्यूर्द्धं; G3 अत्यर्थं; G5 ऋद्धं तत् (for अप्यूर्ध्वं). — (L. 43) Om. in G3. K1. 4 D8 T G1. 4. 5 M1–3. 4 (*sup. lin.* as above) **Cs** सत्यात्; **Ca** सत्वात् (as above). K1 D1 तु ; D8 न (for प्र-). D1 संकल्पः स्वयमाहितः; T G1. 4. 5 M संकल्पो न समाहितः; **Ca. s** as above. — (L. 44) Om. in G3. K1 B4 D1. 8 G4 M (M1 *inf. lin.* as above) ततः; **Cs** यतः (as above). K1. 4 D8 T G1. 4. 5 M यज्ञः; **Cs** as above. K1 प्रतायेत; K4 T G1. 4. 5 M प्रवर्तेत ; B3 Ds **Cs** प्रवर्तते ; D1 प्रतीयंते ; D2 प्रजायंते ; D7 प्रतायंते ; D8 प्रजायीत (for प्रवर्धन्ते). Dn1 Ds1 D1. 5. 6 **Ca** सत्वस्य ; D7 सर्वस्य ; **Cs** सत्यस्य (as above). K1. 4 Ds D1. 7. 8 **Cs** अववोधनात्; M (except M2) **Cn** अवधारणात्; **Ca** अवरोधनात् (as above). — (L. 45) Om. in G3. D3–5 अन्यश्च (both times); **Cs** अन्यस्य (as above). K1. 4 D2. 8 M (except M2) उत ; T1 अपि (for अथ). — (L. 46) Om. in G3. K1 D8 संकल्पसिद्धः; B3 G5 M3. 4 (*inf. lin.* as above). 5 °सिद्धिं; **Ca. s** °सिद्धं (as above). K1 D8 पुरुषः (for पुरुषं), and संकल्पात्. **Ca** असंकल्पः (as above). — (L. 47) M (except M1) मनो ज्ञानमयं शृणु (for the posterior half). — (L. 48) T G1. 3–5 M अध्यापयीत **Ca** अध्यापयेत् (as above). — (L. 49) B1. 2. 5 Dn Ds D3–6 विकारान्; B4 **Cn** विकाराः ; **Ca** अविकारं (for विकारं). — (L. 50) D2 योनौ ; T1 जगत् ; **Ca** योगे (as above). — (L. 51) D1. 8 T G1 M1 य एतत्; G3–5 M3. 4 (*inf. lin.* as above). 5 एतत्; **Ca. s** ये तत् (as above). — (L. 52) T G1. 3–5 M1 (*sup. lin.* as above) इह; **Cs** एव (as above). — (L. 53) Dn D5. 6 जयेत्; G3 वेद (for वदेत्). D2 याजयेत् (for जुहु°). D1. 2 वै (for वा). K1 Ds2 D8 T1 जयेद्वा ; K4 D3. 4 जपेद्वा ; Ds1 D1 M1 (*inf. lin.* as above) यजेत (for यजेद्वा). — (L. 54) K1 D1. 8 तेनैव (for नैतेन). K1 Ds D8 T G1. 4. 5 M1 (*inf. lin.* as above). 3. 4 **Ca. s** अत्येति ; D3. 4 अभ्येत्य ; **Cn** जयति (for अभ्येति). K1. 4 विद्वान् (for राजन्). — (L. 55) K1 T2 (m as above) ऋतं ; D1 T1 G1. 4 धृतिं ; M1 (*inf. lin.* as above). 2 गतिं; **Ca. s** रतिं (as above). K1. 4 D8 लभेत; **Ca** लभते;

नैतेन बालोऽमृत्युमभ्येति राज-
न्रतिं चासौ न लभत्यन्तकाले । [ 55 ]
तूष्णीमेक उपासीत चेष्टेत मनसापि न ।
तथा संस्तुतिनिन्दाभ्यां प्रीतिरोषौ विवर्जयेत् ।
अत्रैव तिष्ठन्क्षत्रिय ब्रह्माविशति पश्यति ।
वेदेषु चानुपूर्व्येण एतद्विद्वन्ब्रवीमि ते ।

Colophon.

3

After 5. 62. 5, N ( $K_{2.3}$ missing) ins.:

यदा परिकरिष्यन्ति ऐणेयानिव तन्तुना ।
अतरित्रानिव जले बाहुभिर्मामका रणे ।
पश्यन्तस्ते परांस्तत्र रथनागसमाकुलान् ।
तदा दर्पं विमोक्ष्यन्ति पाण्डवाः स च केशवः ।
विदुर उवाच ।
इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः । [ 5 ]
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ।
तस्य दानं क्षमा सिद्धिर्यथावदुपपद्यते ।
दमो दानं तपो ज्ञानमधीतं चानुवर्तते ।
दमस्तेजो वर्धयति पवित्रं दम उत्तमम् ।
विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् । [ 10 ]
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
तेषां च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयंभुवा ।
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः ।
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् । [ 15 ]
इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचापलम् ।
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ।
एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः ।
कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनम् ।
मान ईर्ष्या च शोकश्च नैतद्दान्तो निषेवते । [ 20 ]
अजिह्ममशठं शुद्धमेतद्दान्तस्य लक्षणम् ।
अलोलुपस्तथाल्पेप्सुः कामानामविचिन्तिता ।
समुद्रकल्पः पुरुषः स दान्तः परिकीर्तितः ।
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मविद्बुधः ।
प्राप्येह लोके संमानं सुगतिं प्रेत्य गच्छति । [ 25 ]
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः ।
स वै परिणतप्रज्ञः प्रख्यातो मनुजोत्तमः ।

---

$C_{s}$ विंदति (for लभति). $D_{s}$ कामकाले; $C_{a.s}$ अन्तकाले (as above). — (L. 56) $K_{4}$ भूतं; $B_{1}$ $D_{2.5.6.8}$ $C_{a}$ एकं; $B_{3}$ एतं; $B_{5}$ एतत्; $G_{5}$ भूतः; $C_{s}$ एकः (as above). $K_{1}$ $D_{8}$ न चेष्टेत्; $D_{s}$ चेष्टते (for चेष्टेत). $K_{1}$ $B_{3.5}$ $D_{8}$ च (for न). $D_{1.2}$ $T_{1}$ M न चेष्टेन्मनसा अ($D_{1}$ त्व)पि; $D_{7}$ $T_{2}$ $G_{1.3-5}$ न चेच्छेन्मनसा अ($D_{7}$ ह्य)पि. — (L. 57) $K_{1}$ $D_{1.8}$ अथ; T $G_{1.3-5}$ M अपि (for तथा). T $G_{1.3-5}$ प्रीतिद्वेषौ. — (L. 58) $B_{5}$ $D_{3.4}$ क्षत्रियोपि; $G_{1.4}$ वसति (for क्षत्रिय). $K_{1.4}$ $B_{1-3}$ $D_{s}$ $D_{1.8}$ $G_{3}$ M $C_{a.s}$ [आ]वसति (for [आ]विशति). $T_{2}$ (m as above) तिष्ठति; $C_{a}$ पश्यति (as above). $G_{1.4}$ क्षत्रियो ब्रह्म पश्यति (for the posterior half). — (L. 59) $D_{s2}$ $D_{6.8}$ $G_{3}$ आनुपूर्वेण; $C_{a}$ as above. $M_{1}$ विद्वंस्तत्त्वं (for एतद्विद्वन्). $B_{3}$ विप्र; $D_{2}$ ब्रह्म (for विद्वन्). — Colophon. *Adhy. no.*: $K_{1}$ $T_{2}$ $G_{5}$ 45; $D_{n}$ $D_{8}$ 4; $D_{5}$ 44; $D_{6}$ 41; $D_{7}$ $T_{1}$ $G_{1.3.4}$ M 46.

☞ Almost all the lines are either repetitions or variants of verses already occurring in adhy. 42, 43 and 44, as may be seen from the foll. statement: Lines 1–23 = (var.) 5. 43. 8–14. — Line 26 = (var.) 263*. — Lines 27–31 = (var.) 262*. — Lines 32–40 = (var.) 5. 43. 18–20. — Line 42 = (var.) 5. 43. $22^{cd}$. — Lines 43–46 = (var.) 5. 43. $26^{cd}$–$27^{ef}$. — Lines 48–51 = (var.) 5. 44. 24. — Lines 54–55 = (var.) 5. 44. $16^{cd}$. — Line 56 = (var.) 5. 43. $34^{ab}$. — Line 58 = (var.) 5. 42. $24^{cd}$. — Line 59 = (var.) 5. 43. $37^{cd}$.

3

$K_{5}$ om. lines 1–4. — (L. 1) $K_{1}$ $D_{1.5-8}$ $C_{n}$ परिहरिष्यंति; $D_{10}$ °भविष्यंति; $C_{s}$ °भरिष्यंति; $C_{a}$ as above. — (L. 3) $K_{1.4}$ पश्यतः; $D_{1}$ अपश्यन्. — (L. 4) $B_{3}$ $D_{1.2}$ सह (for स च). — (L. 5) $D_{3.4.7}$ दमं (for इह). $K_{5}$ $D_{7.10}$ निश्चय° (for निश्चित°). — (L. 7) $K_{1.4.5}$ $B_{1.3}$ $D_{1-4.7.9.10}$ दानक्रिया (for दानं क्षमा). — $D_{1}$ om. lines 8–10. — (L. 9) $K_{4}$ $D_{3.4}$ उच्यते (for उत्तमम्). — The portion from line 10 up to st. 4 of adhy. 67 is missing in $K_{5}$. — (L. 12) B $D_{n}$ येषां (for तेषां). $K_{1}$ $D_{1.2.8.10}$ वि- (for च). — (L. 18) Om. in $K_{1.4}$ B D (except $D_{5.8}$). — (L. 19) $D_{n1}$ $D_{1.2}$ $C_{a.s}$ मोहः (for दर्पः). $K_{1}$ $D_{7.10}$ कामं लोभं च मोहं च मन्युं निद्रां विकत्थनं. — (L. 20) $K_{1}$ $D_{7.10}$ मानमीर्ष्यां ($D_{7}$ °नं मौर्ख्यं) च शोकं च. — (L. 22) $K_{1}$ $B_{1.2.5}$ $D_{1.2.7.8.10}$ अल्पेच्छः. $D_{s}$ $D_{3-5.8}$ अविर्चितता. — (L. 23) $K_{1}$ $D_{7.10}$ सदा दांतः प्रकीर्तितः. — (L. 25) $K_{1}$ $D_{n}$ $D_{7.8.10}$ सन्मानं (for संमानं). — (L. 26) $K_{1}$ B (except $B_{3}$) $D_{1}$ सर्व- (for यस्य). — (L. 30) $K_{1}$ $D_{1.2.7.10}$ कर्म यत् (for कर्मणा), and पूर्वैः (for पूर्वै). — (L. 34) $K_{1}$ $D_{7.10}$

सर्वभूतहितो मैत्रस्तस्मान्नोद्विजते जनः ।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति ।
कर्मणाचरितं पूर्वं सद्भिराचरितं च यत् । [ 30 ]
तदेवास्थाय मोदन्ते दान्ताः शमपरायणाः ।
नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरँल्लोके ब्रह्मभूयाय कल्पते ।
शकुनीनामिवाकाशे पदं नैवोपलभ्यते ।
एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म न दृश्यते । [ 35 ]
उत्सृज्य वा गृहान्यस्तु मोक्षमेवाभिमन्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वता दिवि ।

Colophon.

4

*After* 5. 90. $1^{ab}$, K5 ins.:

महात्मानो यमिच्छन्ति तपः कृत्वा त्वनेकधा ।
स देवोऽस्य समायातो मम लोचनगोचरे ।
तवातिथ्यं जगन्नाथ किं करोम्यद्य केशव ।
अहमस्मि महीपीठे निर्धनानां शिरोमणिः ।
कृष्ण उवाच ।
साधु साधु महाप्राज्ञ सर्वशास्त्रविशारद । [ 5 ]
यस्त्वं विनयसंपन्नो वयस्त्वय्येव दृश्यते ।
तवाद्य वचसा तुष्ये ददामि कुरुनन्दन ।
वरं वृणीष्व दास्येऽहं यत्ते मनसि रोचते ।
विदुर उवाच ।
अचला केशवे भक्तिर्मानसं त्वद्गतं सदा ।
धर्मे चिन्ता कुले जन्म देहि मे मधुसूदन । [ 10 ]
मा मतिः परद्रव्येषु परदारेषु मा मतिः ।
परापवादिनी जिह्वा मा भूदेव कदाचन ।
आसनं सुतसंकीर्णं विप्रसंकीर्णमन्दिरम् ।
हृदयं शास्त्रसंकीर्णं देहि मे मधुसूदन ।
दुर्भिक्षे चान्नदाताहं सुभिक्षे च हिरण्यदः । [ 15 ]
आतुरेऽहं भयत्राता त्रीणि कृष्ण भवन्तु मे ।
सत्यं शौचं दया दानं भक्तिश्चैव जनार्दने ।
एतान्वरानहं याचे यदि तुष्टोऽसि माधव ।

5

S (T2 om. lines 12–17; G2 om. lines 6–9 and 12–17) ins. after 5. 92. 11: K4 (om. lines 10–24), after 421*:

तस्मै रथवरो युक्तः शुशुभे लोकविश्रुतः ।
वाजिभिः सैन्यसुग्रीवमेघपुष्पबलाहकैः ।
सैन्यस्तु शुकपत्राभः सुग्रीवः किंशुकप्रभः ।
मेघपुष्पो मेघवर्णः पाण्डरस्तु बलाहकः ।
दक्षिणं चावहत्सैन्यः सुग्रीवः सव्यतोऽवहत् । [ 5 ]
पृष्ठवाहौ तयोरास्तां मेघपुष्पबलाहकौ ।
विश्वकर्मकृतापीडा रत्नजालविभूषिता ।
आश्रिता वै रथे तस्मिन्ध्वजयष्टिरशोभत ।
वैनतेयः स्थितस्तस्यां प्रभाकरमिव स्पृशन् ।
तस्य सत्त्ववतः केतौ भुजगारिरशोभत । [ 10 ]
तस्य कीर्तिमतस्तेन भास्वरेण विराजता ।
शुशुभे स्यन्दनश्रेष्ठः पतगेन्द्रेण केतुना ।
रुक्मजालैः पताकाभिः सौवर्णेन च केतुना ।
बभूव स रथश्रेष्ठः कालसूर्य इवोदितः ।
पक्षिध्वजवितानैश्च रुक्मजालकृतान्तरैः । [ 15 ]
दण्डमार्गविभागैश्च सुकृतैर्विश्वकर्मणा ।
प्रवालमणिहेमैश्च मुक्तावैडूर्यभूषणैः ।
किङ्किणीशतसंघैश्च वालजालकृतान्तरैः ।
कार्तस्वरमयीभिश्च पद्मिनीभिरलंकृतः ।
शुशुभे स्यन्दनश्रेष्ठस्तापनीयैश्च पादपैः । [ 20 ]
व्याघ्रसिंहवराहैश्च गोवृषैर्मृगपक्षिभिः ।
ताराभिर्भास्करैश्चापि वारणैश्च हिरण्मयैः ।
वज्राङ्कुशविमानैश्च कूबरावर्तसंधिषु ।
समुच्छ्रितमहानाभिः स्तनयित्नुमहास्वनः ।

6

After 5. 114. 2, D8 ins.:

पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ।
सप्तरक्तं त्रिविस्तीर्णं त्रिगम्भीरं प्रशस्यते ।
पञ्चैव दीर्घा हनुलोचनानि

---

शकुन्तानां यथाकाशे. K1 D1. 2. 7. 10 प्रदृश्यते (for [उ]पलभ्यते). — (L. 35) Om. in D6. K1 D7 पुनर्जन्म न विद्यते (for the posterior half). — (L. 36) Om. in D7. B2. 4 Dn2 [ए]व (for वा). K1 D1. 2. 10 [अ]भिपद्यते; C8 [अ]भिमन्यते (as above). — Colophon. *Adhy. no:* K1 63; D6 59; D7 64.

5

(L. 3) K4 शैब्यस्तु (for सैन्यस्तु), and हैमसंनिभः (for किंशुक°). — (L. 5) T1 G1 [अ]वसत् (for [अ]वहत्). K4 शैब्यः (for सैन्यः). K4 T1 G1 [अ]भवत् (for ऽवहत्). — (L. 6) M3–5 पृष्ठतोभौ (for °वाहौ). — (L. 9) K4 महाबलपराक्रमः (for the posterior half). — (L. 18) T2 G2 रत्न° (for वाल°).

बाहूरुनासाश्च सुखप्रदानि ।
ह्रस्वानि चत्वारि च लिङ्गपृष्ठे [ 5 ]
ग्रीवा च जङ्घे च हितप्रदानि ।
सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशा-
स्त्वक्चैव वै कररुहाश्च नदुःखितानाम् ।
वक्षोऽथ कक्षानखनासिकास्य-
मंसान्तिकं चेति षडुन्नतानि । [ 10 ]
नेत्रान्तपादकरताल्वधरोष्ठजिह्वा
रक्ता नखाश्च खलु सर्वसुखावहानि ।

[ Lines 3-12 are a gloss on the preceding 2 lines. ]

7

After 5. 128. 17, T G ins.:

यथा वाराणसी दग्धा साश्वा सरथकुञ्जरा ।
सानुबन्धस्तु कृष्णेन काशीनामृषभो हतः ।
तथा नागपुरं दग्ध्वा शङ्खचक्रगदाधरः ।
स्वयं कालेश्वरो भूत्वा नाशयिष्यति कौरवान् ।
पारिजातहरं ह्येनमेकं यदुसुखावहम् । [ 5 ]
नाभ्यवर्तत संरब्धो वृत्रहा वसुभिः सह ।
प्राप्य निर्मोचने पाशान्षट्सहस्रांस्तरस्विनः ।
हतास्ते वासुदेवेन ह्युपसंक्रम्य कौरवान् ।
द्वारमासाद्य सौभस्य विधूय गदया गिरिम् ।
द्युमत्सेनः सहामात्यः कृष्णेन विनिपातितः । [ 10 ]
शेषवत्त्वात्कुरूणां तु धर्मापेक्षी तथाच्युतः ।
क्षमते पुण्डरीकाक्षः शक्तः सन्पापकर्मणाम् ।
एते हि यदि गोविन्दमिच्छन्ति सह राजभिः ।
अद्यैवातिथयः सर्वे भविष्यन्ति यमस्य ते ।
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः । [ 15 ]
तथा चक्रभृतः सर्वे वशमेष्यन्ति कौरवाः ।

8

After 5. 129. 13, D8 ins.:

धृतराष्ट्राय प्रददौ भगवान्दिव्यचक्षुषी ।
ददर्श परमं रूपं धृतराष्ट्रोऽम्बिकासुतः ।
ततो देवाः सगन्धर्वाः किंनराश्च महोरगाः ।
ऋषयश्च महाभागा लोकपालैः समन्विताः ।
प्रणम्य शिरसा देवं तुष्टुवुः प्राञ्जलि स्थिताः । [ 5 ]
क्रोधं प्रभो संहर संहर स्वं
रूपं च यद्दर्शितमात्मसंस्थम् ।
यावत्त्विमे देवगणैः समेता
लोकाः समस्ता भुवि नाशमीयुः ।
त्वं च कर्ता विकर्ता च त्वमेव परिरक्षसे । [ 10 ]
त्वया व्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् ।
कियन्मात्रा महीपालाः किंवीर्याः किंपराक्रमाः ।
येषामर्थे महाबाहो दिव्यं रूपं प्रदर्शितवान् ।
एवमुच्चारिता वाचः सह देवैर्विभुस्तथा ।

9

After 5. 157. 5, K4 B Dn1 Ds D1. 3. 4. 6-8. 10 ins.:

*The Fable of the Cat and the Mice*

ज्येष्ठं तथैव कौन्तेयं ब्रूयास्त्वं वचनान्मम ।
भ्रातृभिः सहितः सर्वैः सोमकैश्च सकेकयैः ।
कथं वा धार्मिको भूत्वा त्वमधर्मे मनः कृथाः ।
य इच्छसि जगत्सर्वं नश्यमानं नृशंसवत् ।
अभयं सर्वभूतेभ्यो दाता त्वमिति मे मतिः । [ 5 ]
श्रूयते हि पुरा गीतः श्लोकोऽयं भरतर्षभ ।
प्रह्लादेनाथ भद्रं ते हृते राज्ये तु दैवतैः ।
यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम् ।
अत्र ते वर्तयिष्यामि आख्यानमिदमुत्तमम् । [ 10 ]
कथितं नारदेनेह पितुर्मम नराधिप ।
मार्जारः किल दुष्टात्मा निश्चेष्टः सर्वकर्मसु ।
ऊर्ध्वबाहुः स्थितो राजन्गङ्गातीरे कदाचन ।
स वै कृत्वा मनःशुद्धिं प्रत्ययार्थं शरीरिणाम् ।
करोमि धर्ममित्याह सर्वानेव शरीरिणः । [ 15 ]
तस्य कालेन महता विश्रम्भं जग्मुरण्डजाः ।
समेत्य च प्रशंसन्ति मार्जारं तं विशां पते ।
पूज्यमानस्तु तैः सर्वैः पक्षिभिः पक्षिभोजनः ।
आत्मकार्यं कृतं मेने चर्यायाश्च कृतं फलम् ।
अथ दीर्घस्य कालस्य तं देशं मूषिका ययुः । [ 20 ]
ददृशुस्तं च ते तत्र धार्मिकं व्रतचारिणम् ।
कार्येण महता युक्तं दम्भयुक्तेन भारत ।
तेषां मतिरियं राजन्नासीत्तत्र विनिश्चये ।
बहुमित्रा वयं सर्वे तेषां नो मातुलो ह्ययम् ।
रक्षां करोतु सततं वृद्धबालस्य सर्वशः । [ 25 ]
उपगम्य तु ते सर्वे बिडालमिदमब्रुवन् ।
भवत्प्रसादादिच्छामश्चर्तुं चैव यथासुखम् ।
भवान्नो गतिरव्यग्रा भवान्नः परमः सुहृत् ।
ते वयं सहिताः सर्वे भवन्तं शरणं गताः ।

7

(L. 1) T2 नृपाश्वरथकुंजराः. — (L. 5) T1 G1. 5 कृष्णं (for एकं). — (L. 16) T1 G5 च चक्रिणः (for चक्रभृतः).

9

(L. 1) B3 Ds वचनं (for °नान्). — (L. 22) Ds D7. 10 कादर्येन (for कार्येण). — (L. 24) Ds D8. 7. 10 Cnp

भवान्धर्मपरो नित्यं भवान्धर्मे व्यवस्थितः । [ 30 ]
स नो रक्ष महाप्रज्ञ त्रिदशानिव वज्रभृत् ।
एवमुक्तस्तु तैः सर्वैर्मूषिकैः स विशां पते ।
प्रत्युवाच ततः सर्वान्मूषिकान्मूषिकान्तकृत् ।
द्वयोर्योगं न पश्यामि तपसो रक्षणस्य च ।
अवश्यं तु मया कार्यं वचनं भवतां हितम् । [ 35 ]
युष्माभिरपि कर्तव्यं वचनं मम नित्यशः ।
तपसास्मि परिश्रान्तो दृढं नियममास्थितः ।
न चापि गमने शक्तिं कांचित्पश्यामि चिन्तयन् ।
सोऽस्मि नेयः सदा ताता नदीकूलमितः सुखम् ।
तथेति तं प्रतिज्ञाय मूषिका भरतर्षभ । [ 40 ]
वृद्धबालमथो सर्वे मार्जाराय न्यवेदयन् ।
ततः स पापो दुष्टात्मा मूषिकानथ भक्षयन् ।
पीवरश्च सुवर्णश्च दृढबन्धश्च जायते ।
मूषिकाणां गणश्चात्र भृशं संक्षीयतेऽथ सः ।
मार्जारो वर्धते चापि तेजोबलसमन्वितः । [ 45 ]
ततस्ते मूषिकाः सर्वे समेत्यान्योन्यमब्रुवन् ।
मातुलो वर्धते नित्यं वयं क्षीयामहे भृशम् ।
ततः प्राज्ञतमः कश्चिड्डिण्डिको नाम मूषिकः ।
अब्रवीद्वचनं राजन्मूषिकाणां महागणम् ।
गच्छतां वो नदीतीरं सहितानां विशेषतः । [ 50 ]
पृष्ठतोऽहं गमिष्यामि सहैव मातुलेन तु ।
साधु साध्विति ते सर्वे पूजयांचक्रिरे तदा ।
चक्रुश्चैव यथान्यायं डिण्डिकस्य वचोऽर्थवत् ।
अविज्ञानात्ततः सोऽथ डिण्डिकं ह्युपभुक्तवान् ।
ततस्ते सहिताः सर्वे मन्त्रयामासुरञ्जसा । [ 55 ]
तत्र वृद्धतमः कश्चित्कोलिको नाम मूषिकः ।
अब्रवीद्वचनं राजञ्ज्ञातिमध्ये यथातथम् ।
न मातुलो धर्मकामश्छद्ममात्रं कृता शिखा ।
न मूलफलभक्षस्य विष्ठा भवति लोमशा ।
अस्य गात्राणि वर्धन्ते गणश्च परिहीयते । [ 60 ]
अद्य सप्ताष्टदिवसान्डिण्डिकोऽपि न दृश्यते ।
एतच्छ्रुत्वा वचः सर्वे मूषिका विप्रदुद्रुवुः ।
बिडालोऽपि स दुष्टात्मा जगामैव यथागतम् ।
तथा त्वमपि दुष्टात्मन्बैडालं व्रतमास्थितः ।
चरसि ज्ञातिषु सदा बिडालो मूषिकेष्विव । [ 65 ]
अन्यथा किल ते वाक्यमन्यथा कर्म दृश्यते ।
दम्भनार्थाय लोकस्य वेदाश्चोपशमश्च ते ।
त्यक्त्वा छद्म त्विदं राजन्क्षत्रधर्मं समाश्रितः ।
कुरु कार्याणि सर्वाणि धर्मिष्ठोऽसि नरर्षभ ।
बाहुवीर्येण पृथिवीं लब्ध्वा भरतसत्तम । [ 70 ]
देहि दानं द्विजातिभ्यः पितृभ्यश्च यथोचितम् ।
क्लिष्टाया वर्षपूगांश्च मातुर्मातृहिते स्थितः ।
प्रमार्जाश्रु रणे जित्वा संमानं परमावह ।
पञ्च ग्रामा वृता यत्नान्नास्माभिरपवर्जिताः ।
युध्यामहे कथं संख्ये कोपयेम च पाण्डवान् । [ 75 ]
त्वत्कृते दुष्टभावस्य संत्यागो विदुरस्य च ।
जातुषे च गृहे दाहं स्मर तं पुरुषो भव ।
यच्च कृष्णमवोचस्त्वमायान्तं कुरुसंसदि ।
अयमस्मि स्थितो राजञ्शमाय समराय च ।
तस्यायमागतः कालः समरस्य नराधिप । [ 80 ]
एतदर्थं मया सर्वं कृतमेतद्युधिष्ठिर ।
किं नु युद्धात्परं लाभं क्षत्रियो बहु मन्यते ।
किं च त्वं क्षत्रियकुले जातः संप्रथितो भुवि ।
द्रोणादस्त्राणि संप्राप्य कृपाच्च भरतर्षभ ।
तुल्ययोनौ समबले वासुदेवं समाश्रितः । [ 85 ]
ब्रूयास्त्वं वासुदेवं च पाण्डवानां समीपतः ।
आत्मार्थं पाण्डवार्थं च यत्तो मां प्रतियोधय ।

---

वहमित्रा. D1 ह्यसि (for ह्ययं). — (L. 29) Ds भवतः (for °न्तं). — (L. 31) K4 Dn1 D1.7.10 महाप्राज्ञ. — (L. 35) B4 D1 transp. वचनं and भवतां. Ds D7 भवतां रक्षणं हितं (for the posterior half). — (L. 39) K4 B3.5 Dn1 D1.7.8 तात. Dn1 D8 परं (for सुखं). — (L. 40) Ds D1.7.8 ते; D3.4.10 तत् (for तं). B3 ते तथेति विनिश्चित्य (for the prior half). — (L. 41) B1.3.4 Dn1 सर्वै. — (L. 42) K4 D3.4.7 [अ]पि; B3 तान् (for [अ]थ). B3 अभक्षयत्. — (L. 48) K4 B1–3 Ds1 D3.4.6 तत्र (for ततः). Dn1 दंडिकः; Ds दिणिकः; D7 दिंडिकः. — (L. 55) Ds D7 वा (for वो). — (L. 51) Ds D7 ते (for तु). B3 transp. सहैव and मातुलेन. — (L. 53) K4 Ds D3.4.7.10 ऊचुः (for चक्रुः). Dn1 दंडिकस्य; Ds तिणिकस्य; D7 दिंडिकस्य (for डिण्डि°). — (L. 54) K4 Dn1 D8 Ca उपयुक्तवान् (for °भुक्तवान्). — (L. 58) B2.3 transp. कृता and शिखा. Dn1 D1.8 छद्ममात्रकृता, शिखा (for the posterior half). — (L. 60) B3.5 D1 अंगानि त(D1 चा)स्य वर्धंते (for the prior half). — (L. 61) Ds D7 transp. [अ]पि and न. — (L. 64) Ds D3.4.7 वैडालव्रतम्. — (L. 67) Ds D7 दंभमास्थाय (for °नार्थाय). — (L. 68) D3.4.7.10 छद्ममिदं; Cn छद्म इदं. D3.4.10 समास्थितः (for °श्रितः). — (L. 69) D3.4 transp. कार्याणि and सर्वाणि. — (L. 72) B5 D1 संमानय च बांधवान् (for the posterior half). — (L. 74) K4 D8 अपि वर्जिताः; Ca अप° (as above). — (L. 75) D7.10 वयं (for कथं). — (L. 77) Ds1 D3.4 संसरन्; D7 स्मरन् त्वं (for स्मर तं). — (L. 79) B3.5 D1 transp. शमाय and समराय. — (L. 81) K4 Ds D3.4.7.10 सार्धं (for सर्वं).

सभामध्ये च यद्रूपं मायया कृतवानसि ।
तत्तथैव पुनः कृत्वा सार्जुनो मामभिद्रव ।
इन्द्रजालं च मायां वै कुहका वापि भीषणा । [ 90 ]
आत्तशस्त्रस्य संग्रामे वहन्ति प्रतिगर्जनाः ।
वयमप्युत्सहेम द्यां खं च गच्छेम मायया ।
रसातलं विशाऽमोपि ऐन्द्रं वा पुरमेव तु ।
दर्शयेम च रूपाणि स्वशरीरे बहून्यपि ।
न तु पर्यायतः सिद्धिर्बुद्धिमाप्नोति मानुषीम् । [ 95 ]
मनसैव हि भूतानि धातैव कुरुते वशे ।
यद्ब्रवीषि च वार्ष्णेय धार्तराष्ट्रानहं रणे ।
घातयित्वा प्रदास्यामि पार्थेभ्यो राज्यमुत्तमम् ।
आचचक्षे च मे सर्वं संजयस्तव भाषितम् ।
मद्द्वितीयेन पार्थेन वैरं वः सव्यसाचिना । [ 100 ]
स सत्यसंगरो भूत्वा पाण्डवार्थे पराक्रमी ।
युध्यस्वाद्य रणे यत्तः पश्यामः पुरुषो भव ।
यस्तु शत्रुमभिज्ञाय शुद्धं पौरुषमास्थितः ।
करोति द्विषतां शोकं स जीवति सुजीवितम् ।
अकस्माच्चैव ते कृष्ण ख्यातं लोके महद्यशः । [ 105 ]
अद्येदानीं विजानीमः सन्ति षण्ढाः सश्मश्रुकाः ।
मद्विधो नापि नृपतिस्त्वयि युक्तः कथंचन ।
सन्नाहं संयुगे कर्तुं कंसभृत्ये विशेषतः ।,

which is followed by 5. 157. 16.

[ For the fable, cf. Bilāra-jātaka (ed. Fausboll, vol. 1, pp. 460–61), presenting a jackal (unaccountably substituted for the cat), which similarly pretends asceticism to beguile a troop of rats. ]

## 10

After 5. 157. 17 (which is transposed), $K_4$ B $Dn_1$ Ds $D_1$ (om. lines 1–6). 3. 4. 6–8. 10 ins.:

यद्ब्रवीषि च कौन्तेय धार्तराष्ट्रानहं रणे ।
निहनिष्यामि तरसा तस्य कालोऽयमागतः ।
त्वं हि भोज्ये पुरस्कार्यो भक्ष्ये पेये च भारत ।
क्व युद्धं क्व च भोक्तव्यं युध्यस्व पुरुषो भव ।
शयिष्यसे हतो भूमौ गदामालिङ्ग्य भारत । [ 5 ]
तद्वृथा च सभामध्ये वल्गितं ते वृकोदर ।
उलूक नकुलं ब्रूहि वचनान्मम भारत ।
युध्यस्वाद्य स्थिरो भूत्वा पश्यामस्तव पौरुषम् ।
युधिष्ठिरानुरागं च द्वेषं च मयि भारत ।
कृष्णायाश्च परिक्लेशं स्मरेदानीं यथातथम् । [ 10 ]
ब्रूयास्त्वं सहदेवं च राजमध्ये वचो मम ।
युध्येदानीं रणे यत्तः क्लेशान्स्मर च पाण्डव ।
विराटद्रुपदौ चोभौ ब्रूयास्त्वं वचनान्मम ।
न दृष्टपूर्वा भर्तारो भृत्यैरपि महागुणैः ।
तथार्थपतिभिर्भृत्या यतः सृष्टाः प्रजास्ततः । [ 15 ]
अश्लाघ्योऽयं नरपतिर्युवयोरिति चागतम् ।
ते यूयं संहता भूत्वा तद्वधार्थं ममापि च ।
आत्मार्थं पाण्डवार्थं च प्रयुध्यध्वं मया सह ।
धृष्टद्युम्नं च पाञ्चाल्यं ब्रूयास्त्वं वचनान्मम ।
एष ते समयः प्राप्तो लब्धव्यश्च त्वयापि सः । [ 20 ]
द्रोणमासाद्य समरे ज्ञास्यसे हितमुत्तमम् ।
युध्यस्व ससुहृत्पापं कुरु कर्म सुदुष्करम् ।
शिखण्डिनमथो ब्रूहि उलूक वचनान्मम ।
स्त्रीति मत्वा महाबाहुर्न हनिष्यति कौरवः ।
गाङ्गेयो धन्विनां श्रेष्ठो युध्येदानीं सुनिर्भयम् । [ 25 ]
कुरु कर्म रणे यत्तः पश्यामः पौरुषं तव ।
एवमुक्त्वा ततो राजा प्रहस्योलूकमब्रवीत् ।
धनंजयं पुनर्ब्रूहि वासुदेवस्य शृण्वतः ।

## 11

After 5. 157. 18 (which is a variant of 5. 158. 11), $K_4$ B $Dn_1$ Ds $D_{8.3.10}$ read for the first time 5. 158. 12–41 (with v.l. and ins.), *repeating* the

---

— (L. 82) $D_{3.4}$ पुत्रात् (for युद्धात्). $B_3$ नानु-; $B_5$ [अ]प्यनु- (for बहु). — (L. 83) $Dn_1$ $Ds_1$ $D_{10}$ संप्रथिते; $D_{3.4}$ संप्रार्थितो. — (L. 86) $K_4$ $D_8$ धर्मराजसमीपतः (for the posterior half). — (L. 87) $K_4$ $B_5$ $D_{3.4.8}$ आत्मानं (for °र्थं). — (L. 90) = (var.) 5. 158. $35^{ab}$. $B_{1.2.4}$ न (for च). $K_4$ $D_{3.4.8}$ कुहको (for °का). $B_{1.2}$ $D_8$ [अ]पि भीषणी; $B_3$ Ds $D_{1.10}$ विभीषणी; $D_{3.4}$ विभीषिका (for [अ]पि भीषणा). — (L. 91) = (var.) 5. 158. $35^{cd}$. — (L. 95) $Dn_1$ Cnp ननु; $D_1$ न हि; Cn न तु (as above). — L. 95–96 = (var.) 5. 158. 26. — L. 100 = (var.) 5. 58. $22^{cd}$.

10

(L. 4) $Ds_1$ $D_7$ क्षत्रियो (for पुरुषो). — (L. 16) $K_4$ $D_{8.4.7.10}$ अहं (for अयं). — (L. 17) $B_{2.3}$ $D_7$ सहिता (for संहता). — (L. 21) Ds $D_7$ आगम्य (for आसाद्य). — (L. 22) $K_4$ चार्थं; $B_{3.4}$ $Dn_1$ Ds $D_{7.8.10}$ Cnp स्वार्थं; $D_{3.4}$ पार्थं; Cn पापं (as above). — (L. 25) $D_{8.4.10}$ युध्यतां; $D_7$ धर्मिणां; $D_8$ रथिनां (for धन्विनां). $B_4$ स्थिरो भव (for सुनिर्भयम्). — (L. 26) $B_3$ $D_1$ कुरु कर्माणि संयुक्तः ($D_1$ °यत्तः) (for the prior half). $B_{1.3.4}$ पश्यामि पुरुषो भव (for the posterior half).

passage in its proper place :

असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् ।
एवं कत्थसि कौन्तेय अकत्थन्पुरुषो भव ।
सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ।
द्रोणं च बलिनां श्रेष्ठं शचीपतिसमं युधि । [ 5 ]
अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ।
ब्राह्मे धनुषि चाचार्यं वेदयोरन्तगं द्वयोः ।
युधि धुर्यमविक्षोभ्यमनीकचरमच्युतम् ।
द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा ।
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् । [ 10 ]
अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम् ।
युगं वा परिवर्तेत यद्येवं स्याद्यथात्थ माम् ।
को ह्यस्ति जीविताकाङ्क्षी प्राप्येममरिमर्दनम् ।
पार्थो वा इतरो वापि कोऽन्यः स्वस्ति गृहान्व्रजेत् ।
कथमाभ्यामभिध्यातः संस्पृष्टो दारुणेन वा । [ 15 ]
रणे जीवन्प्रमुच्येत पदा भूमिमुपस्पृशन् ।
किं दर्दुरः कूपशयो यथेमां
न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां
गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् । [ 20 ]
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यै-
रुदीच्यकाम्बोजशकैः खशैश्च ।
शाल्वैः समत्स्यैः कुरुमध्यदेश्यै-
र्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ।
नानाजनौघं युधि संप्रवृद्धं [ 25 ]
गाङ्गं यथा वेगमपारणीयम् ।
मां च स्थितं नागबलस्य मध्ये
युयुत्ससे मन्द किमल्पबुद्धे ।
अक्षय्याविषुधी चैव अग्निदत्तं च ते रथम् ।
जानीमो हि रणे पार्थ केतुं दिव्यं च भारत । [ 30 ]
अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु ।
पर्यायात्सिद्धिरेतस्य नैतत्सिध्यति कत्थनात् ।
यदीदं कत्थनाल्लोके सिध्येत्कर्म धनंजय ।
सर्वे भवेयुः सिद्धार्थाः कत्थने को हि दुर्गतः ।
जानामि ते वासुदेवं सहायं [ 35 ]
जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्यहं त्वादृशो नास्ति योद्धा
जानानस्ते राज्यमेतद्धरामि ।
न तु पर्यायधर्मेण सिद्धिं प्राप्नोति मानवः ।
मनसैवानुकूलानि धातैव कुरुते वशे । [ 40 ]
त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये त्वां निहत्य सबान्धवम् ।
क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणैर्जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फाल्गुन ।
सगदाद्भीमसेनाद्वा फाल्गुनाद्वा सगाण्डिवात् । [ 45 ]
न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दिताम् ।
सा वो दास्ये समापन्नान्मोचयामास पार्षती ।
अमानुष्यं समापन्नान्दासकर्मण्यवस्थितान् ।
अवोचं यत्षण्ढतिलानहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा । [ 50 ]
सूदकर्मणि विश्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यत्तु तन्मम पौरुषम् ।
एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
वेणीं कृत्वा षण्ढवेषः कन्यां नर्तितवानसि ।
न भयाद्वासुदेवस्य न चापि तव फाल्गुन । [ 55 ]
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ।
न माया हीन्द्रजालं वा कुहका वापि भीषणाः ।
व्यात्तशस्त्रस्य संग्रामे वहन्ति प्रतिगर्जनाः ।
वासुदेवसहस्रं वा फाल्गुनानां शतानि वा ।
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश । [ 60 ]
संयुगं गच्छ भीष्मेण भिन्धि वा शिरसा गिरिम् ।
तरस्व वा महागाधं बाहुभ्यां पुरुषोदधिम् ।
शारद्वतमहामीनं सौमदत्तितिमिंगिलम् ।
भीष्मवेगमपर्यन्तं द्रोणग्राहदुरासदम् ।
कर्णशल्यझषावर्तं काम्बोजवडवामुखम् । [ 65 ]
दुःशासनौघं शलशल्यमत्स्यं
सुषेणचित्रायुधनागनक्रम् ।
जयद्रथाद्रिं पुरुमित्रगाधं
दुर्मर्षणोदं शकुनिप्रपातम् ।
शस्त्रौघमक्षय्यमभिप्रवृद्धं [ 70 ]
यदावगाह्य श्रमनष्टचेताः ।
भविष्यसि त्वं हतसर्वबान्धव-
स्तदा मनस्ते परितापमेष्यति ।
तदा मनस्ते त्रिदिवादिवाशुचे-
र्निवर्तिता पार्थ महीप्रशासनात् । [ 75 ]
प्रशाम्य राज्यं हि सुदुर्लभं त्वया
बुभूषितः स्वर्ग इवातपस्विना ।

Colophon.

12

After 5. 159. 6, K4 B Dn1 D8 D3. 4. 6–8. 10 ins. :

एवमुक्त्वा महाबाहुः केशवो राजसत्तम ।
पुनरेव महाप्राज्ञं युधिष्ठिरमुदैक्षत ।
सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ।
द्रुपदस्य सपुत्रस्य विराटस्य च संनिधौ ।
भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह । [ 5 ]
उलूकोऽप्यर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।

